(क) कुत्र किं पदं रिक्तं वर्तते ?

(ख) आवेदनाय के सूचिताः सन्ति ?

(ग) कीदृशः आवेदकः विशेषग्राह्यः कथितः ?

(घ) पञ्चतारा-शिक्षानिकेतनं कुत्र वर्तते ?

(ङ) आवेदकस्य न्यूनतमा शैक्षिकयोग्यता का अपेक्षिता ?

(च) आवेदकैः कीदृशानि पत्राणि प्रस्तोतव्यानि ?

**८. पाठप्रयुक्तानि कानिचन दश दीर्घतरसमस्तपदानि अन्विष्य तेषां शुद्धोच्चारणं कुरुत ।**

**९. शब्दार्थान् कथयत**

विनयिनः, मुखाकृतिम्, विराजितः, कुन्तीनन्दनः, आहुतः, महायशस्वी, दृढतरा, हर्षकान्तिः, न्यमन्त्रयत्, सन्ध्याकाले, निष्णातम्

**१०. अधस्तनं नीतिपद्यं सलयं वाचयित्वा भावार्थं च पठत ।**

दिवसेनैव तत् कुर्याद् येन रात्रौ सुखं वसेत् ।
यावज्जीवं च तत्कुर्याद् येन प्रेत्य सुखं भवेत् ॥

**भावार्थः–** निष्क्रियो भूत्वा वृथा कालक्षेपणं नोचितम् । अतः सर्वदा कर्मशीलैर्भाव्यम् । प्रातः उत्थाय सायङ्कालपर्यन्तमादिवसं वयं स्वस्य उन्नतये कार्याणि कुर्मः । प्रतिदिनं समये एव कार्यं क्रियते चेत् अस्माकं रात्रिकालः सुखदायको भवति । एवमेव वयमाजीवनं सर्वजनहिताय आत्मोन्नतये च सत्कर्माणि कुर्मः । आजीवनं सत्कर्म क्रियते चेत् मरणान्तरं सुखं सद्गतिञ्च प्राप्स्यामः ।

## लेखनम्

**१. परस्परं मेलयत**

| | |
|---|---|
| द्रोणः | कौरवः |
| अर्जुनः | द्रोणपुत्रः |
| युधिष्ठिरः | आचार्यः |
| अश्वत्थामा | धनुर्विद्याप्रवीणः |
| दुर्योधनः | युवराजः |

२. **प्रदत्तपदानां वाक्यरचनां कुरुत**

एकाकी, शिष्येभ्यः, कुतः, रात्रौ, परीक्षार्थम्, निर्देशम्, अन्वगच्छन्, मलिनता, सज्जीभूय, अग्रे

३. **विपरीतार्थकपदानि मञ्जूषातः सम्मेल्य लिखत**

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| परिश्रमी | तदानीम् | विगतः | अनुजः | वरः | सदाचारी | हर्षितः | समाप्त |
| अधमः | दुःखितः | दुराचारी | प्रारम्भः | अलसः | अनागतः | इदानीम् | अग्रजः |

४. **पाठात् संयुक्ताक्षरयुतान् काँश्चन दश शब्दान् अन्विष्य लिखत ।**

५. **अधस्तनानि अव्ययपदानि वाक्येषु योजयत**

सर्वत्र, इदानीम्, प्राप्य, विधाय, अतः, भूयः, एवम्, विज्ञातुम्, इव, सह

६. **कोष्ठकस्य सङ्केतानुसारं रिक्तस्थानं पूरयत**

(क) द्रोणः परीक्षार्थं .............. वनेऽनयत् । (राजकुमार, द्वितीयाबहुवचनम्)

(ख) अर्जुनः .............. अपि अस्त्राभ्यासं करोति स्म । (रात्रि, सप्तम्येकवचनम्)

(ग) अस्त्रपरीक्षायां पक्षिपुङ्गलस्य नेत्रं ........... भेदनीयमासीत् ।(बाण, तृतीयैकवचनम्)

(घ) परीक्षार्थं राजकुमाराः .............. वनं गताः । (राजप्रासाद, पञ्चम्येकवचनम्)

(ङ) .............. परीक्षायामर्जुनः एव समुत्तीर्णो जातः । (गुरु, षष्ठ्येकवचनम्)

७. **उदाहरणमनुसृत्य विशेषणपदस्य समुचितेन विशेष्यपदेन सह मेलनं कृत्वा प्रदर्शयत**

धनुर्धरः, नैपुण्यम्, आचार्यः, युधिष्ठिरः, रथः, महान्, वटवृक्ष, अभ्यासजम्, गुरुभक्तिः, युवराजः, परीक्षा, अहङ्कारिणः, अर्जुनः, विनयिनः, पक्षिपुङ्गलः, दृढतरा, स्वकीयः, पाण्डवाः, विधीयमाना, द्रोणः, शाखावलम्बितः, मुखम्, स्वाभाविकः, कौरवाः, मलिनम्, प्रश्नः

यथा -

| विशेषणपदानि | विशेष्यपदानि |
|---|---|
| धर्नुधरः | अर्जुनः |

८. **संस्कृतेऽवादं कृत्वा लिखत**

(क) ठुलो घरमा धेरै मानिसहरू छन् ।

(ख) जङ्गलमा हिंस्रक जन्तुहरू हुन्छन् ।

(ग) मिठो बोली सबैलाई मन पर्छ ।

(घ) नेपालमा राम्रा राम्रा हिमालहरू छन् ।

(ङ) समाजका दुःखी मानिसलाई सहयोग गर ।

(च) मलाई रातो फूल मन पर्‍यो ।

९. **उदाहरणमनुसृत्य प्रदत्तं वाक्यद्वयं एकवाक्ये संश्लेषयत**

यथा - नर्मदा पुष्पाणि अवचिनोति । नर्मदा मालां ग्रथ्नाति ।

नर्मदा पुष्पाणि अवचित्य मालां ग्रथ्नाति ।

(क) महापुरुषाः दयालवः भवन्ति । ते परोपकारं कुर्वन्ति ।

(ख) हरिभजनः हिमालं पश्यति । स अत्यन्तं रमते ।

(ग) त्वं गृहं गच्छसि । ओदनं खादसि ।

(घ) कृषकः परिश्रमी वर्तते । स कृषिकर्म कुरुते ।

(ङ) अहं नगराद् आगमिष्यामि । अहं तुभ्यमुपहारं दास्यामि ।

१०. **वाक्यगतामशुद्धिं संशोध्य पुनर्लेखनं कुरुत**

(क) राधा जलानि आहर्तुं घटं गृहीत्वा कूपः गतवती ।

(ख) आलस्यं परित्यज्य पठन्तः छात्राः सफलतां प्राप्नोति ।

(ग) नीलगगनः मेघमाला दृश्यते ।

(घ) पितामहः उपन्यासः पठित्वा मां श्रावयति ।

(ङ) गुरुः विद्यार्थिनां हितचिन्तनं कुर्वन्ति ।

**११. उत्तरं लिखत**

(क) अर्जुनः कथं गुरुकृपां प्राप्तुं समर्थोऽभवत् ?

(ख) आचार्यो राजकुमारान् किमर्थं वनमनयत् ?

(ग) रथादारुह्य राजकुमाराः किमकुर्वन् ?

(घ) दुर्योधनः आत्मानं किं मनुते स्म ?

(ङ) परीक्षायां राजकुमारैः किं कर्तव्यमासीत् ?

(च) द्रोणः परीक्षार्थिषु कं प्रश्नं पृष्टवान् ?

(छ) प्रथमोऽन्तिमश्च परीक्षार्थी कः आसीत् ?

(ज) युधिष्ठिरो बाणसन्धानसमये किं किमपश्यत् ?

(झ) राजकुमाराणां बाणस्य लक्ष्यं किमासीत् ?

(ञ) केषामुत्तरेण द्रोणस्य मुखं मलिनमभवत् ?

(ट) द्रोणः कदा प्रसन्नो जातः ?

(ठ) कः लक्ष्यभेदने सफलः ?

**१२. पाठस्य सप्तमानुच्छेदस्य अनुलेखनमष्टमानुच्छेदस्य श्रुतलेखनं च कुरुत ।**

**१३. भावार्थं लिखत**

रणे जीवने च साफल्यं प्राप्तुकामैः सर्वैः सदा लक्ष्ये दृष्टिः कर्तव्या ।

**१४. 'अर्जुनस्य परीक्षा' इति कथायाः सन्देशं लिखत ।**

**१५. पाठस्य मुख्यानां घटनानां क्रमं निर्दिशत ।**

१६. **अधस्तनानुच्छेदस्य समुचितं शीर्षकं प्रदाय सारांशं लिखत**

संसारे अनेके महान्तः समाजसेविनः अभवन् । तेऽहोरात्रं समाजस्य विकासाय आजीवनं समर्पिताः अभवन् । परार्थभावनया समाजस्योन्नतये सामाजिकानां सदस्यानां च हिताय विधीयमाना स्वार्थरहिता सेवा समाजसेवा निगद्यते । समाजसेवायां संलग्नाः जनाः समाजसेविनः कथ्यन्ते । समाजसेवायाः भावना सर्वेषां मनःसु न समुदेति । अत्यन्तं न्यूना जनाः एव समाजस्य दुरवस्थां सामाजिकसदस्यानां च दुःखं विलोक्य समाजसेवार्थमात्मप्रेरिताः भवन्ति । एतेषां सेवाकर्मणा समाजस्य विकासः सम्भवति चेत् दीनजनानां स्थितौ सकारात्मकं परिवर्तनमायाति । अतः समाजे समाजसेविनः सदाऽनुकरणीयाः भवन्ति । समाजस्य अवस्थामावश्यकतां च विचार्य समाजसेवा विधीयते । समाजे मार्गस्य, शिक्षायाः, पेयजलस्य, भूमिसेचनस्य, चिकित्सालयस्य, नद्याः सेतुनिर्माणस्य वा आवश्यकता विद्यते चेत् समाजसेविनः व्यवस्थां कुर्वन्ति । समाजे विद्यमानानां कुरीतीनां निर्मूलीकरणाय, चेतनाविस्ताराय श्रमहीनानां युवकानां कृते अर्थाश्रितस्य श्रमस्य अन्वेषणाय च समाजसेविनः निरन्तरं प्रयतन्ते । समाजसेवया सर्वेषां कल्याणमेव भवति । अतोऽस्माकं समाजे समाजसेविनः सदा वन्दनीयाः मन्यन्ते ।

संसारमा धेरै महान् समाजसेवी भए । उनीहरू दिनरात समाजको विकासका लागि आजीवन समर्पित भए । परार्थको भावनाले समाजको उन्नति र सामाजिक सदस्यको कल्याणका लागि गरिने निःस्वार्थ सेवा नै समाजसेवा हो । यसमा संलग्न व्यक्तिलाई समाजसेवी भनिन्छ । समाजसेवाको भावना सबैको मनमा उत्पन्न हुँदैन । थोरै मानिस मात्र समाजको दुरावस्था र समाजका मानिसको दुःख देखेर समाजसेवा गर्न आफैँ प्रेरित हुन्छन् । यिनीहरूको सेवामूलक कर्मबाट समाजको विकास हुन्छ भने दीनदुःखीको अवस्थामा पनि सकारात्मक परिवर्तन आउँछ । त्यसैले समाजमा यस्ता मानिस सधैँ अनुकरणीय हुन्छन् । समाजको अवस्था र आवश्यकता विचार गरी समाजसेवा गरिन्छ । समाजमा बाटोघाटो, शिक्षा, खानेपानी, सिँचाइ, अस्पताल, नदीमा पुल वा केको आवश्यकता छ, त्यसको व्यवस्था समाजसेवीले गर्दछन् । समाजमा रहेका कुरीति हटाएर चेतानाको विस्तार गर्ने तथा बेरोजगार युवकका लागि आयमूलक रोजगारीको खोजी गर्ने काममा समाजसेवी निरन्तर प्रयास गर्दछन् । समाजसेवाबाट सबैको कल्याण हुने गर्दछ । त्यसैले हाम्रो समाजमा समाजसेवी सधैँ वन्दनीय मानिएका हुन् ।

## व्याकरणानुशीलनम्

१. **लृट्लकारस्य प्रयोगः**

भ्राता चलयन्त्रं याचिष्यते । दीपावल्यां गृहे एव मिष्टान्नानि पक्ष्यन्ते ।
त्वं शिक्षायाः महत्त्वविषये भाषिष्यसे । स्वकर्मणि आवां दुःखं सहिष्यावहे ।
वायौ प्रचलिते लताः कम्पिष्यन्ते । अहमाम्रफलानि भक्षिष्ये ।

उपर्युक्तानि वाक्यानि सामान्ये भविष्यत्काले प्रयुक्तानि सन्ति । वाक्यगतात् क्रियापदात् कालस्य ज्ञानं भवति । पाणिनीयव्याकरणानुसारं भविष्यत्काले लृट्लकारस्य प्रयोगो भवति । क्रियापदानि परस्मैपदे आत्मनेपदे च भवन्ति । उपर्युक्तेषु वाक्येषु वर्तमानानि क्रियापदानि आत्मनेपदे वर्तन्ते । आत्मनेपदस्थानां क्रियापदानां लृट्लकारे धातौ अधोनिर्दिष्टानां प्रत्ययानां योगो भवति -

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | धातु+इष्यते/स्यते | धातु+इष्येते/स्येते | धातु+इष्यन्ते/स्यन्ते |
| द्वितीयः पुरुषः | धातु+इष्यसे/स्यसे | धातु+इष्येथे/स्येथे | धातु+इष्यध्वे/स्यध्वे |
| तृतीयः पुरुषः | धातु+इष्ये/स्ये | धातु+इष्यावहे/स्यावहे | धातु+इष्यामहे/स्यामहे |

यथा रुच्धातोः लभ्धातोश्च लृट्लकारस्य रूपावली अधः दृश्यताम् -

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | रोचिष्यते | रोचिष्येते | रोचिष्यन्ते |
| द्वितीयः पुरुषः | रोचिष्यसे | रोचिष्येथे | रोचिष्यध्वे |
| तृतीयः पुरुषः | रोचिष्ये | रोचिष्यावहे | रोचिष्यामहे |

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | लप्स्यते | लप्स्येते | लप्स्यन्ते |
| द्वितीयः पुरुषः | लप्स्यसे | लप्स्येथे | लप्स्यध्वे |
| तृतीयः पुरुषः | लप्स्ये | लप्स्यावहे | लप्स्यामहे |

(क) **अधोनिर्दिष्टधातून् प्रयुज्य लृट्लकारस्य आत्मनेपदगतानि सर्वाणि रूपाणि लिखत**

कृ, एध्, कम्प्, हृ, मुद्, सेव्, लभ्

२. **अधोनिर्दिष्टवाक्यानि लृट्लकारे परिवर्तनं कुरुत**

(क) पुत्रः पितामहं सेवते ।

(ख) वृक्षस्य पत्राणि वेपन्ते ।

(ग) पुत्रौ शनैः शनैः वर्धेते ।

(घ) अहं श्रमेण विद्यां लभे ।

(ङ) यूयं विदेशाद् धनानि आनयध्वे ।

## प्रेरणार्थकक्रियाप्रयोगः

गुरुः छात्रान् व्याकरणं पाठयति ।

कौरवाः पाण्डवान् वनं गमयन्ति ।

भुवनः रमितां हिमालस्य चित्रं दर्शयति ।

दाता बुभुक्षितान् भक्तान् खादयति ।

अहं त्वां गीतं श्रावयामि ।

उपर्युक्तेषु वाक्येषु गुरुः, पाण्डवाः, भुवनः, दाता, अहं चेति पदानि कर्तृपदानि सन्ति । तैः कर्तृभिः क्रियोक्तानि पठनादिकार्याणि स्वयं न कृतानि किन्तु तत् कर्म कर्तु छात्रादयः प्रेरिताः दृश्यन्ते । यत्र क्रियायां प्रेरणायाः बोधो भवति तादृशी क्रिया प्रेरणार्थिका निगद्यते । प्रेरणार्थकक्रियायां कर्ता किमपि कार्यं स्वयं न करोति किन्तु तदर्थमन्यान् प्रेरयति । यथा = धनिकः याचकं धनं ग्राहयति । अत्र धनिकः कर्तृपदम् । कर्तृरूपः धनिकोऽत्र स्वयं धनं न गृह्णाति किन्तु धनग्रहणाय निर्धनान् प्रेरयति । अतः ग्राहयति इति प्रेरणार्थकक्रिया वर्तते । प्रेरणार्थकक्रियापदानां रूपावली सामान्यधातुवत् भवति । यथा -

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः | ग्राहयति | ग्राहयतः | ग्राहयन्ति |
| द्वितीयः | ग्राहयसि | ग्राहयथः | ग्राहयथ |
| तृतीयः | ग्राहयामि | ग्राहयावः | ग्राहयामः |

'हेतुमति च' इति पाणिनीयसूत्रानुसारं प्रेरणादिवाच्येऽप्रेरणार्थके सामान्यधातौ प्रेरणार्थकेन णिच् (इ) प्रत्यययोगेन प्रेरणार्थकधातुः निर्मितो भवति । तादृशाद् धातोः प्रेरणार्थकक्रिया निर्मीयते । यथा -

| अप्रेरणार्थकक्रिया | अप्रेरणार्थकधातुः | प्रेरणार्थकः णिच् (इ) प्रत्यययोगः | प्रेरणार्थकधातुः | प्रेरणार्थकक्रिया |
|---|---|---|---|---|
| चलति | चल् | चल् + इ | चालि | चालयति |
| शृणोति | श्रु | श्रु + इ | श्रावि | श्रावयति |
| गच्छति | गम् | गम् + इ | गमि | गमयति |
| करोति | कृ | कृ + इ | कारि | कारयति |
| सिञ्चति | सिच् | सिच् + इ | सेचि | सेचयति |

## प्रेरणार्थकवाक्यरचना

पथिकाः नदीं तरन्ति । (अप्रेरणार्थकवाक्यम्)

नाविकः पथिकान् नदीं तारयति । (प्रेरणार्थकवाक्यम्)

सामान्यनियमः = सामान्यवाक्ये प्रेरकः कर्ता योजनीयः । प्रेरितकर्ता द्वितीयाविभक्तौ परिवर्तनीया । सामान्यक्रिया प्रेरणार्थे परिवर्तनीया । यथा उक्तवाक्ये नाविकः इति प्रेरककर्ता योजितः । पथिका इति प्रेरितकर्ता द्वितीयाविभक्तौ (पथिकान्) परिवर्तितः । एवमन्यत्रापि बोद्धव्यम्

प्रेरणार्थकवाक्यरचनायाः अन्यानि उदाहरणानि ।

| अप्रेरणार्थकवाक्यानि | प्रेरणार्थकवाक्यानि |
|---|---|
| अहं वृक्षमारोहामि । | स मां वृक्षम् आरोहयति । |
| वधू गृहं प्रविशति । | पुत्रः वधूं गृहं प्रवेशयति । |
| शिशुः दुग्धं पिबति । | माता शिशुं दुग्धं पाययति । |
| पिता धर्मं बोधति | गुरुः पितरं धर्मं बोधयति । |
| भगिनी हसति । | भ्राता भगिनीं हासयति । |

**(क) अधोदत्तानां वाक्यानां प्रेरणार्थे परिवर्तनं कुरुत**

(अ) पथिकः नदीं तरति ।

(आ) राजुः चित्रं लिखति ।

(इ) मातुलः पीठिकायां तिष्ठति ।

(ई) सरला सम्यक् नृत्यति ।

(उ) सखा चिकित्सकः भवति ।

**(ख) अधस्तनानां क्रियापदानां प्रेरणार्थकं रूपं लिखत**

करोति, चलति, क्रीडतः, त्यजति, शिक्षते, पतन्ति

## रचनात्मकः अभ्यासः

१. **स्वरचितां श्रुतां वा कामपि एकां स्वल्पाकारां कथां लिखित्वा शिक्षकं दर्शयत ।**

२. **अधःप्रस्तुतां घटनावलीमनुसृत्य शीर्षकं च दत्त्वा कथां पूरयत**

वने गोवत्सः घासभक्षणरतः ............. तत्र बुभुक्षितस्य व्याघ्रस्य आगमनम् ............. व्याघ्रं दृष्ट्वापि गोवत्सस्य निर्भयता ............. तस्य निर्भयतां दृष्ट्वा व्याघ्रः चकितः ............. मद्भोजनार्थं मरणाय सज्जो भवितु व्याघ्रस्य कथनम् ............. गोवत्सः प्रसन्नः सन् व्याघ्रस्य भोजनाय सज्जः ............. मृत्यून्मुखमपि गोवत्सं प्रसन्नं दृष्ट्वा व्याघ्रः पुनः चकितः ............. गोवत्सं खादितुं व्याघ्रस्य तत्समीपागमनम् ............. मरणात् प्राक् काचन इच्छा अस्ति चेत् कथनाय व्याघ्रस्य कथनम् ............. मम पादे विद्धः कण्टकः भवतः मुखेऽपि विद्धः भवितु शक्नोतीति हेतोः पूर्वं तमपाकर्तुं गोवत्सस्य अनुरोधः ............. विद्धकण्टकं पादं प्रदर्शयितुं व्याघ्रस्य आदेशः ............. गोवत्सद्वारा पृष्ठवर्तिनः पादस्य प्रदर्शनम् ............. स्वमुखं गोवत्सस्य पादनिकटं कृत्वा व्याघ्रस्य कण्टकदर्शनम् ............. गोवत्सस्य व्याघ्रमुखे पादप्रहारः ............. आहतस्य व्याघ्रस्य पलायनम् ............. । गोवत्सस्यापि झटिति गोष्ठे प्रत्यागमनम् ............. आपत्सु बुद्धिः कार्यसाधिका इति सन्देशः ।

३. **स्वकल्पनानुसारं समुचितानां घटनानां संयोजनं विधाय अधस्तनीं कथां पूरयत**

एकस्मिन् ग्रामे कश्चनः कृषकः निवसति स्म । तस्य पत्नी पुत्रीमेकां जनयित्वा प्रसवव्यथया मृता । स कृषिं कुर्वन् पुत्र्याश्च पालने संलग्नोऽभवत् । तस्याः कृते कृषकः कृषिवस्तूनां विक्रयं विधाय द्रव्यसञ्चयमकरोत् । पुत्री अपि शनैः शनैः पञ्चवर्षीया जाता । कृषकः सञ्चितानि द्रव्याणि ग्राममुख्याय संरक्षणार्थमददात् । यदा मम पुत्री विवाहयोग्या भविष्यति तदाहं इमानि द्रव्याणि ग्रहीतुमागमिष्यामि इति स ग्राममुख्यं प्रति अकथयत् । ग्राममुख्योऽपि कृषकस्य तं प्रस्तावं स्वीकृतवान् ।

## श्रवणपाठः

मित्रेषु वर्तमानो भावनात्मकः सम्बन्धो मित्रतापदेन बुध्यते । मित्रता मित्रैः क्रियमाणेषु व्यवहारेषु अनुभूयते । पारस्परिकीं हितभावनां विहाय अत्र नापरः स्वार्थो भवति । हितचिन्तनं हितसम्पादनञ्च मित्रयायाः परममुद्देश्यम् । अतो मित्रता हृदयग्राह्या भवति । सरलं सुखदं च जीवनं जीवितुं मित्रता अपेक्ष्यते । मनोवाक्कायकर्मभिः मित्रस्य सहयोगः, स्मरणं, मार्गनिर्देशः, संरक्षणञ्च सन्मित्रस्य परमं कर्तव्यं मन्यते । कर्तव्यकरणेन मित्रतायामात्मीयता अभिवर्धते । आत्मीयाः मित्रजनाः मिथः समर्पिताः भवन्ति । कुमार्गिणं अपि सखायं सुमार्गे आनेतुं मित्रयायाः विशिष्टा भूमिका भवति । बुद्धस्य मैत्रीव्यवहारेण क्रुरस्वभावोऽङ्गुलीमालः सत्पथे समागतः ।

मित्रतायां धनविद्यादिगतः यादृशस्तादृशो वा कोऽपि भेदो न भवति । ऐश्वर्यशालिनः भगवतो श्रीकृष्णस्य परमः सखा सुदामा निर्धनः आसीत् तथापि तयोर्मध्ये हार्दिकं प्रेम पारस्परिकः सम्मानभावः हितभावना च आसीत् । इदानीमपि आदर्शमैत्रस्य कृते कृष्णसुदाम्नो नाम उदाह्रियते । एतादृशी मित्रता तदैव सम्भवति यदा मित्रतायां पवित्रता, उदारता, निश्चलता, गुणग्राहिता, विश्वासः, प्रेम, सहयोगिभावना चेत्यादयः गुणाः भवन्ति । एतादृशैः मैत्रीगुणैः सम्पन्नः मित्रवान् जनः नीतिशास्त्रे पुण्यवान् कथितः ।

**यस्य मित्रेण सम्भाषो यस्य मित्रेण संस्थितिः ।**

**यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ॥**

# तृतीयः पाठः

**पाठप्रवेशः**

## पुस्तकालयः

नीरा जनकपुरधामनि वसति । सा मिथिलेश-संस्कृत-माध्यमिकविद्यालये पठति । तस्याः पिता विद्यालयस्य पुस्तकालये कार्यं करोति । विद्यालयस्य परिसरे नवीनं पुस्तकालयभवनं निर्मितं वर्तते । अद्य पुस्तकालयभवनस्य उद्घाटनकार्यक्रमो वर्तते । भवनं भव्यरूपेण सज्जीकृतमस्ति । नीरा पित्रा सह पुस्तकालयभवनं प्रविशति । तत्र चतस्रः पुस्तकाधान्यः स्थापिताः सन्ति । पुस्तकानि इतस्ततो विकीर्णानि दृश्यन्ते । प्रथमायां पुस्तकधान्यां 'साहित्यम्', द्वितीयायां 'विज्ञानम्', तृतीयायां च 'गणितम्' इति लिखितं पत्रखण्डं योजितं वर्तते । चतुर्थ्यां 'पौराणिकवाङ्मयम्' इत्युल्लिखितमस्ति । तस्या अधस्थानां पुस्तकानामावरणपृष्ठेषु 'रामायणम्', 'महाभारतम्', 'पुराणम्' चेति लिखितानि सन्ति । नीरा साहित्यम्, विज्ञानम्, गणितं च पठितवती अस्ति परं पौराणिकवाङ्मयमधीतवती नास्ति । सा तन्नामापि श्रुतवती नास्ति । सा पितुः पुरस्ताद् जिज्ञासते । पिता तां रामायण-महाभारत-पुराणानां पुस्तकानि दर्शयति । स एकां पुस्तिकां पठितुं तस्यै ददाति । नीरा साभिरुचि पुस्तिकां पठितुमारभते ।



नीरा जनकपुरधाममा बस्छिन् । उनी मिथिलेश संस्कृत माध्यमिक विद्यालयमा पढ्छिन् । उनका बुबा विद्यालयको पुस्तकालयमा काम गर्नुहुन्छ । विद्यालयको परिसरमा नयाँ पुस्तकालय भवन बनेको छ । आज पुस्तकालय भवनको उद्घाटन कार्यक्रम छ । भवन भव्य रूपमा सजाइएको छ । नीरा बुबासँग पुस्तकालय भवनमा प्रवेश गर्छिन् । त्यहाँ चारओटा पुस्तक राख्ने आलमारी राखिएका छन् । पुस्तक यताउति छरिएका देखिन्छन् । पहिलो आलमारीमा 'साहित्य', दोस्रोमा 'विज्ञान' र तेस्रोमा 'गणित' लेखिएका कागजका चिर्कटा टाँसिएका छन् । चौथोमा 'पौराणिक वाङ्मय' लेखिएको छ । त्यसको तल रहेका पुस्तकहरूको गातामा 'रामायण, महाभारत, पुराण' लेखिएको छ । नीराले साहित्य, विज्ञान र गणित पढेकी छन् तर पौराणिक वाङ्मय पढेकी छैनन् । उनले त्यसको नाम पनि सुनेकी छैनन् । उनी बुबासँग जिज्ञासा राख्छिन् । बुबा उनलाई रामायण, महाभारत र पुराणका ग्रन्थ देखाउनुहुन्छ । उहाँ एउटा पुस्तिका पढ्न उनलाई दिनुहुन्छ । नीरा चाख मानेर पुस्तिका पढ्न थाल्छिन् ।

**मूलपाठः**

# पौराणिकं वाङ्मयम्

यत् प्राचीनं पुरातनं चास्ति तत् पौराणिकं कथ्यते । पौराणिकपदं पुराणस्य, पुराणसम्बद्धं पुराणे सन्निहितं वेति अर्थं च बोधयति । व्यवहारे पुराणवाचकोऽपि पौराणिक उच्यते । वाचां राशिर्वाङ्मयं भवति । कस्यामपि भाषायां लिखिताः शास्त्र-ग्रन्थ-साहित्याभिलेखादिरचना वाङ्मयपदेनाभिज्ञायन्ते । प्राचीनकाले लिखिता निखिला सामग्री पौराणिकं वाङ्मयं भवति । संस्कृते समृद्धं पौराणिकं वाङ्मयं वर्तते । व्यापकदृष्ट्या पुरा संस्कृते लिखिताः सर्वा रचनाः पौराणिकं वाङ्मयं भवितुमर्हन्ति । श्रुति-स्मृति-रामायण-महाभारतादीनि ग्रन्थरत्नानि पौराणिकवाङ्मय-पथमायान्ति । इदानीमीषदर्थपरिवर्तनं जातमस्ति । व्यवहारश्च परिवर्तमानो वर्तते । वर्तमानसमये पौराणिकं वाङ्मयं प्रायः पुराणान्येव बोधयति, नान्यत् ।

'पुराणम्' इति पदस्यार्थः पुराणेष्वेव कृतोऽस्ति । वायुपुराणे प्राचीनकालतो यज्जीवितमस्ति तदेव पुराणमित्युक्तमस्ति । मत्स्यपुराणे पुरातनकालस्य घटना बुधाः पुराणं प्रवदन्तीति उल्लिखितमस्ति । पुराणस्य परिभाषया एतानि पञ्च लक्षणानि निर्दिष्टानि सन्ति - सर्गः (सृष्टिः), प्रतिसर्गः (प्रलयः पुनःसृष्टिश्च), वंशः (देवतानां वंशावलिः), मन्वन्तरम् (मनोः कालविभागः), वंशानुचरितं (राज्ञां वंशवृत्तम्) च । यथा-

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**

**वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥**

सृष्टेः, मनुष्याणाम्, देवानाम्, दानवानाम्, राज्ञाम्, महात्मनाम्, ऋषीणाम्, मुनीनां च प्राचीनकथा प्राचीनविवरणं च पुराणमिति प्रसिद्धिर्वर्तते ।





पुराणानां रचनाकालस्य विषये नैकमतमुपलभ्यते । जगन्नियन्तुः यज्ञमयपरमात्मनः पुराणानि उत्पन्नानीति पौराणिकानां शास्त्रीयमतमस्ति । अथर्ववेदे, शतपथब्राह्मणे, आपस्तम्बसूत्रे, रामायणे, महाभारते च पुराणशब्दस्य प्रयोगो दृश्यते । ततस्तदा पुराणानि आसन्निति ज्ञायते । पुराणान्येव एतेषामाविर्भावविषये विविधानि मतानि उल्लिखन्ति । आदिशङ्कराचार्यो बृहदारण्यकोपनिषद्भाष्ये पुराणानि परमेश्वरस्य निःश्वासरूपाणि इति उक्तवानस्ति । विष्णुपुराणं प्रथमं पुराणं मन्यते । एतस्य रचनाकालः शतात् त्रिशतपार्यन्तिकं खिस्टवर्षमनुमीयते । पश्चात्तनं पुराणं ब्रह्मवैवर्तपुराणमस्ति । एतद् षोडश्यां शताब्द्यां पूर्णतां गतमिति मतं प्रचलितं वर्तते । एतावता परमात्मनः षोडशशताब्दीं यावत् पुराणानि उत्पन्नानि विकसितानि चेति सारं बुध्यते ।

महर्षिर्वेदव्यासः पुराणानि व्यरचयत् । अष्टादश पुराणानि व्यासप्रणीतानि सन्ति । एतानि महापुराणानि निगद्यन्ते । यथा-

१. ब्रह्मपुराणम् (चतुर्दशसहस्रैः श्लोकैर्युतम्)
२. पद्मपुराणम् (पञ्चाशत्सहस्रैः श्लोकैर्ग्रथितम्)
३. विष्णुपुराणम् (षट्सहस्रैः श्लोकैर्निबद्धम्)
४. शिवपुराणम् (चतुर्विंशतिसहस्रश्लोकात्मकम्)
५. श्रीमद्भागवतपुराणम् (अष्टादशसहस्रैः श्लोकैराबद्धम्)
६. नारदपुराणम् (पञ्चविंशतिसहस्रश्लोकयुतम्)
७. मार्कण्डेयपुराणम् (नवसहस्रश्लोकबद्धम्)
८. अग्निपुराणम् (पञ्चदशसहस्रैः श्लोकैर्निबद्धम्)
९. भविष्यपुराणम् (चतुर्दशसहस्रश्लोकात्मकम्)
१०. ब्रह्मवैवर्तपुराणम् (पञ्चविंशतिसहस्रैः श्लोकैः सहितम्)
११. लिङ्गपुराणम् (एकादशसहस्रश्लोकयुतम्)
१२. वराहपुराणम् (चतुर्विंशतिसहस्रश्लोकसहितम्)
१३. स्कन्दपुराणम् (एकाशीतिसहस्रैः श्लोकैराबद्धम्)
१४. वामनपुराणम् (दशसहस्रश्लोकयुक्तम्)
१५. कूर्मपुराणम् (सप्तदशसहस्रश्लोकबद्धम्)
१६. मत्स्यपुराणम् (चतुर्दशसहस्रश्लोकयुतम्)
१७. गरुडपुराणम् (अष्टादशसहस्रश्लोकात्मकम् ऊनविंशतिसहस्रश्लोकात्मकं वा)
१८. ब्रह्माण्डपुराणम् (द्वादशसहस्रश्लोकसहितम्) ।

एतेषु पुराणेषु समग्रतश्चत्वारि लक्षाणि श्लोकाः परिगणिताः सन्ति । अष्टादश उपपुराणानि अष्टादश एव औपपुराणानि च सन्ति । तानि यथा -

## उपपुराणानि

| | | |
|---|---|---|
| १. आदित्यपुराणम् | २. नरसिंहपुराणम् | ३. स्कन्दपुराणम् |
| ४. शिवधर्मपुराणम् | ५. दुर्वासःपुराणम् | ६. नारदीयपुराणम् |
| ७. कपिलपुराणम् | ८. वामनपुराणम् | ९. औसनसपुराणम् |
| १०. ब्रह्माण्डपुराणम् | ११. वरुणपुराणम् | १२. कालिकापुराणम् |
| १३. माहेश्वरपुराणम् | १४. साम्बपुराणम् | १५. सौरपुराणम् |
| १६. पाराशरपुराणम् | १७. मारीचपुराणम् | १८. भास्करपुराणम् । |

## औपपुराणानि

| | | |
|---|---|---|
| १. सनत्कुमारपुराणम् | २. बृहन्नारदीयपुराणम् | ३. आदित्यपुराणम् |
| ४. सूर्यपुराणम् | ५. नन्दीकेश्वरपुराणम् | ६. कौर्मपुराणम् |
| ७. भागवतपुराणम् | ८. वशिष्ठपुराणम् | ९. भार्गवपुराणम् |
| १०. मुद्गलपुराणम् | ११. कल्किपुराणम् | १२. देवीपुराणम् |
| १३. महाभागवतपुराणम् | १४. बृहद्धर्मपुराणम् | १५. परानन्दपुराणम् |
| १६. वह्निपुराणम् | १७. हरिवंशपुराणम् | १८. पशुपतिपुराणम् । |

कानि महापुराणानि, कानि उपपुराणानि, कानि च औपपुराणानि इति विषये मतैक्यं नास्ति । एतेषां नाम्नां विषयेऽपि प्रभूतं मतान्तरणं वर्तते । महापुराणानीव उपपुराणानि औपपुराणानि च वेदव्यास एव लिलेख इति केचिद् वदन्ति । केषाञ्चन मते तु अन्ये रचयामासुः सम्पादयामासुर्वा ।

पुराणानां रचनाविषयेऽपरमपि मतमस्ति । एतदनुसारेण कृष्णद्वैपायनव्यासः पाण्डवानां राज्यकालेऽष्टाविंशवारं पुराणानि समपादयत् । तत्पूर्वं पुराणमेकमेवातिविस्तृतं चासीत् । व्यासो विषयाणामनुसारेण अष्टादशभागेषु विभाजनमकरोत् । तदनन्तरमपि सततं सम्पादनं बभूव, नवीनविषयाणां प्रविष्टिक्रमश्चाचलत् । कालक्रमेण उपपुराणानामौपपुराणानां च रचना अभवत् ।

पुराणानि विविधैराधारैः वर्गीकृतानि सन्ति । गुणानामाधारेण पुराणानि त्रिधा विभज्यन्ते । यथा -

१. **सत्त्वगुणप्रधानानि** – विष्णु-नारद-भागवत-गरुड-पद्म-वराहपुरणानि । देवप्राधान्यदृष्ट्या इमानि वैष्णवमतानि मन्यन्ते ।

२. **रजोगुणप्रधानानि** – ब्रह्माण्ड-ब्रह्मवैवर्त-मार्कण्डेय-भविष्य-वामन-ब्राह्मपुराणानि । ब्रह्मणः प्राधान्याद् एतानि ब्राह्ममतानि उच्यन्ते ।

३. **तमोगुणप्रधानानि** – मत्स्य-कूर्म-लिङ्ग-शिव-स्कन्दाग्निपुराणानि । शिवशक्त्योः प्राधान्याद् इमानि शैवमतानि शाक्तमतानि वा निगद्यन्ते ।

तमिलभाषायाः पौराणिकसाहित्ये देवाधारेण पुराणानि पञ्चधा विभक्तानि दृश्यन्ते । यथा-

| देवः | पुराणानि |
|---|---|
| ब्रह्मा | ब्रह्म-पद्मपुराणे |
| सूर्यः | ब्रह्मवैवर्तपुराणम् |
| अग्निः | अग्निपुराणम् |
| शिवः | शिव-स्कन्द-लिङ्ग-कूर्म-वामन-वराह-भविष्य-मत्स्य-मार्कण्डेय-ब्रह्माण्डपुराणानि |
| विष्णुः | नारद-भागवत-गरुड-विष्णुपुराणानि |

पुराणानि तत्त्वज्ञानं प्रतिपादयन्ति । वेदेषु अन्तर्निहितं दार्शनिकं ज्ञानं कथाप्रसङ्गैः सारल्येन प्रतिपादनं पुराणानां वैशिष्ट्यं वर्तते । पुराणानि उपास्यदेवानां वर्णनं कुर्वन्ति । इन्द्राग्निप्रभृतीनां वैदिकदेवानामपेक्षया लौकिकदेवस्य विष्णोर्दशावताराणां वर्णनं पुराणानामभीष्टं दृश्यते । वंशवृत्तस्य वर्णनं पुराणानामपरं वैशिष्ट्यं वर्तते । मनोरारभ्य देव-दानव-राजर्षि-मुन्यादीनां वंशविवरणं पुराणेषु उपलभ्यते । पुराणेभ्यो भौगोलिकज्ञानमपि अवाप्यते । द्वीप-देश-समुद्र-विपिनानां ज्ञानाप्तये पुराणानि एव प्रमाणमस्ति । पुराणेषु कालचिन्तनमपि प्राप्यते । युगभेद-मन्वन्तर-कल्पादयो विषया अत्र साधु व्याख्याताः सन्ति । पुराणानि समन्वयप्रधाना ग्रन्थाः सन्ति । एतानि बहुदेववादं वर्णयन्ति । पुराणानि धर्म-नीति-संस्कृति-समन्वय-सहिष्णुता-सदाचाराणां मार्गदर्शनं कुर्वन्ति ।

नैपालकसमाजे प्राचीनकालात् पौराणिकवाङ्मयस्य प्रभावो विद्यमानोऽस्ति । विशेषतः श्रीमद्भागवत-देवीभागवत-शिव-गरुडपुराणानामनुष्ठानं प्रवचनं च विधीयेते । वर्तमानसमये वैद्युतसञ्चारमाध्यमेष्वपि पौराणिकः कथाप्रसङ्गः श्रूयते दृश्यते च । पौराणिकवाङ्मयस्य कथाबीजमनुसृत्य नेपालीभाषायामन्यासु भाषासु च लोकरञ्जकं साहित्यं लिखितमस्ति । नेपालिसमाजः सभक्ति सश्रद्धं च पौराणिकवाङ्मयं पठति, शृणोति, पूजयति च ।

जुन प्राचीन र पुरानो छ त्यो पौराणिक भनिन्छ । पौराणिक पदले पुराणको, पुराणसम्बद्ध वा पुराणमा सन्निहित भन्ने अर्थ बुझाउँछ । व्यवहारमा पुराणवाचकलाई पनि पौराणिक भनिन्छ । वाणीको राशि वाङ्मय हो । कुनै पनि भाषामा लेखिएका शास्त्र, ग्रन्थ, साहित्य, अभिलेख आदि रचना वाङ्मय पदबाट बुझिन्छन् । प्राचीन कालमा लेखिएका सम्पूर्ण सामग्री पौराणिक वाङ्मय हुन्छन् । संस्कृतमा समृद्ध पौराणिक वाङमय छ । व्यापक दृष्टिले हेर्दा पहिले संस्कृतमा लेखिएका सबै रचना पौराणिक वाङ्मय हुन सक्छन् । श्रुति, स्मृति, रामायण, महाभारत आदि पौराणिक वाङ्मयमा पर्छन् । अहिले अर्थमा केही परिवर्तन भएको छ । व्यवहार पनि परिवर्तित हुँदै छ । अहिले पौराणिक वाङ्मयले प्रायः पुराणहरूलाई मात्र बुझाउँछ, अरूलाई बुझाउँदैन ।

'पुराण' पदको अर्थ पुराणहरूमै गरिएको छ । वायुपुराणमा प्राचीन कालदेखि जुन जीवित छ त्यो नै पुराण हो भनिएको छ । मत्स्यपुराणले पुराना समयका घटनालाई विद्वान्ले पुराण भनेका छन् भन्ने उल्लेख गरेको छ । पुराणको परिभाषाले पुराणका पाँच लक्षण देखाएको छ : सर्ग, प्रलय, देवताहरूको वंशावली, मनुको कालविभाग र राजाहरूको वंशवृत्त । सृष्टि, मनुष्य, देवता, दानव, राजा, महात्मा, ऋषि र मुनिहरूको प्राचीन कथा र प्राचीन विवरण पुराण हो भन्ने प्रसिद्धि छ ।

पुराणको रचनाकालका विषयमा मतैक्य पाइँदैन । जगत्का नियन्ता यज्ञमय परमात्माबाट पुराण उत्पन्न भए भन्ने पौराणिकहरूको शास्त्रीय मत छ । अथर्ववेद, शतपथब्राह्मण, आपस्तम्बसूत्र, रामायण र महाभारतमा पुराणशब्दको प्रयोग देखिन्छ । यसबाट त्यस वेला पुराण थिए भन्ने थाहा हुन्छ । पुराणमा नै यिनको आविर्भावका विषयमा विभिन्न मत उल्लेख गरिएको छ । आदिशङ्कराचार्यले बृहदारण्यकोपनिषद्को भाष्यमा पुराणलाई परमेश्वरको निश्वासरूप भनेका छन् । विष्णुपुराण पहिलो पुराण मानिन्छ । यसको रचनाकाल इस्वी संवत् एक सयदेखि तीन सयसम्म अनुमान गरिएको छ । पछिल्लो पुराण ब्रह्मवैवर्तपुराण हो । यो सोह्रौँ शताब्दीमा पूर्ण भयो भन्ने मत प्रचलित छ । यसरी परमात्मादेखि सोह्रौँ शताब्दीसम्म पुराण उत्पन्न र विकसित भएको सार बुझिन्छ ।

महर्षि वेदव्यासले पुराणको रचना गरे । अठार पुराण वेदव्यासले रचना गरेका हुन् । यी महापुराण भनिन्छन् । यिनमा करिब चार लाख श्लोक छन् ।

अठार उपपुराण र अठारै औपपुराण पनि छन् । कुन महापुराण, कुन उपपुराण र कुन औपपुराण हुन् भन्ने विषयमा मतैक्य छैन । यिनका नामका विषयमा पनि प्रशस्त मतान्तर छ । कोही महापुराण जस्तै उपपुराण र औपपुराण पनि वेदव्यासले नै लेखेका हुन् भन्दछन् । कसैको मतमा अरूले नै रचना गरे वा सम्पादन गरे ।

पुराणको रचनाका विषयमा अर्को पनि मत छ । सोअनुसार कृष्णद्वैपायन व्यासले पाण्डवको राज्यकालमा अट्ठाइसौँ पटक पुराणको सम्पादन गरे । त्यसभन्दा पहिले पुराण एउटै र अति विस्तृत थियो । व्यासले विषयअनुसार अठार भागमा विभाजन गरे । त्यसपछि पनि लगातार सम्पादन हुँदै गयो र नयाँ विषयको प्रवेश गराउने क्रम पनि चलिरह्यो । त्यस क्रममा उपपुराण र औपपुराणको रचना भयो ।

पुराणलाई विभिन्न आधारबाट वर्गीकरण गरिएको छ । गुणका आधारमा पुराणलाई तीन वर्गमा विभाजन गरिएको छ । छओटा पुराणलाई सत्त्वगुणप्रधान मानिएको छ । यी वैष्णवपुराण मानिन्छन् । छओटा पुराणलाई रजोगुणप्रधान मानिएको छ । यी ब्राह्मपुराण मानिन्छन् । छओटा पुराणलाई तमोगुणप्रधान मानिएको छ । यी शैवपुराण वा शाक्तपुराण मानिन्छन् ।

तमिल भाषाको पौराणिक साहित्यमा पुराणहरूको विभाजन ब्रह्मा, सूर्य, अग्नि, शिव र विष्णु गरी पाँच देवताका आधारमा गरिएको छ ।

पुराणले तत्त्वज्ञान प्रतिपादन गरेका छन् । वेदमा अन्तर्निहित दार्शनिक ज्ञानलाई कथाप्रसङ्गद्वारा सजिलोसँग प्रतिपादन गर्नु पुराणको विशेषता हो । पुराणहरूले उपास्य देवताको वर्णन गरेका छन् । इन्द्र, अग्नि आदि वैदिक देवताको सट्टा लौकिक देवता विष्णुका दश अवतारको वर्णन गर्नु पुराणको उद्देश्य देखिन्छ । वंशपरम्पराको वर्णन पुराणको अर्को विशेषता हो । मनुदेखि लिएर देवता, दानव, राजा, ऋषिमुनि आदिको वंशवर्णन पुराणहरूमा पाइन्छ । पुराणबाट भौगोलिक ज्ञान पनि पाइन्छ । टापु, देश, समुद्र र वनजङ्गलबारे जान्नका लागि पुराण नै प्रमाण हुन् । पुराणमा कालका विषयमा पनि चिन्तन गरिएको छ । युगभेद, मन्वन्तर, कल्प जस्ता विषयमा यहाँ राम्रोसँग व्याख्या गरिएको छ । पुराण समन्वयप्रधान ग्रन्थ हुन् । यिनले बहुदेववादको वर्णन गरेका छन् । पुराणले धर्म, नीति, संस्कृति, समन्वय, सहिष्णुता र सदाचारको मार्गनिर्देशन गरेका छन् ।

नेपाली समाजमा प्राचीन कालदेखि पौराणिक वाङ्मयको प्रभाव रहिआएको छ । विशेष गरी श्रीमद्भागवत, देवीभागवत, शिवपुराण र गरुडपुराणको अनुष्ठान र प्रवचन गरिन्छ । आजभोलि विद्युत्बाट चल्ने सञ्चारका साधनहरूमा पनि पौराणिक कथा सुन्न र हेर्न पाइन्छ । पौराणिक वाङ्मयका कथाको अनुसरण गरेर नेपाली र अन्य भाषामा पनि लोकलाई आनन्द दिने साहित्य लेखिएको छ । नेपाली समाज भक्ति र श्रद्धासाथ पौराणिक वाङ्मय पढ्ने, सुन्ने र पुज्ने गर्दछ ।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| पुरातनम् | पुराभवम् | पुरानो | Ancient |
| वाङ्मयम् | वाक्समूहः | वाङ्मय | Consisting of words |
| श्रुतिः | वेदः | वेद | The Veda |
| स्मृतिः | वेदार्थानुभवजन्यशास्त्रम् | वेदको आशय भएको शास्त्र | Traditional doctrine |
| ग्रन्थरत्नम् | शास्त्ररत्नम् | ग्रन्थ/किताब | A work, treatise composition, literary production |
| इदानीम् | अधुना | अहिले | Now |
| ईषत् | किञ्चित् | थोरै | Slightly |
| उपलभ्यते | प्राप्यते | पाइन्छ | Find |
| जगन्नियन्ता | संसारस्य सृष्टिस्थितिलयकर्ता | संसारको रचना, पालना र संहार गर्ने | Almighty |
| यज्ञमयपरमात्मा | भगवान् | ईश्वर | God |
| शास्त्रीयमतम् | शास्त्रोक्तविचारः | शास्त्रीय मान्यता | Scriptural thought |
| निःश्वासरूपाणि | बहिर्मुखश्वासरूपाणि | सासजस्तै | As inhaling |
| त्रिशतपार्यन्तिकम् | आत्रिशतवर्षीयम् | ३०० वर्षसम्मको | Up to three hundred years |
| खिष्टवर्षम् | ईशवीयवर्षम् | ई.सं. | A.D. |
| महर्षिः | परमर्षिः | महर्षिः | Saint |
| व्यासप्रणीतानि | व्यासरचितानि | व्यासले रचना गरेका | Created by Vyasa |
| मतैक्यम् | मतसामान्यम् | एक मत | Aggrement |
| सत्वगुणप्रधानानि | सत्वगुणप्रमुखानि | सत्वगुण मुख्य भएका | Full of Sattwaguna |

| | | | |
|---|---|---|---|
| रजोगुणप्रधानानि | रजोगुणप्रचूराणि | रजोगुणले भरिएका | Full of Rajoguna |
| तमोगुणप्रधानानि | तमोगुणमयानि | तमोगुण प्रधान भएका | Full of Tamoguna |
| सारल्येन | सरलतया | सजिलोसँग | Easy |
| अन्तर्निहितम् | अन्तर्भूतम् | कुनै मूल कुराभित्र अन्तर्भाव भएको | concealed |
| उपास्यदेवानाम् | पूज्यदेवतानाम् | पूजा गरिने देवताहरूका | Worthy of worship |
| प्रभृति | आदिः | आदि | Start |
| मनोरारभ्य | मनुप्रभृतिः | मनुबाट सुरु भएर | From Manu |
| विपिनम् | वनम् | जङ्गल | Forest |
| समन्वयप्रधानाः | समन्वययुक्ताः | सबै मतलाई सम्मान गर्ने | Having co-ordination |

## अभ्यासः

### श्रवणं भाषणं च

१. **पाठस्य अनुच्छेदान् एकैकशः उच्चारयत । एकस्य उच्चारणम् अन्ये शृणुत ।**

२. **शिक्षकस्य साहाय्येन अधस्तनानि पदानि श्रुत्वा शुद्धम् उच्चारयत**

श्रुतिः, स्मृतिः, वाङ्मयम्, सत्वगुणप्रधानानि, त्रिशतपार्यन्तिकम्, मतैक्यम्, आपस्तम्बसूत्रम्, ब्रह्मवैवर्तपुराणम्, प्रविष्टिक्रमः, स्कन्दः, वैद्युतसञ्चारमाध्यमेषु, सहिष्णुता ।

३. **कस्यचन प्राचीनग्रन्थस्य विषये पञ्च वाक्यानि वदत ।**

४. **पुराणेषु श्रुतानां पञ्च चरित्राणां नामानि वदत ।**

## ५. चित्रं दृष्ट्वा वर्णयत



## ६. पाठस्य तृतीयमनुच्छेदं श्रुत्वा एकवाक्येन उत्तरयत

(क) पौराणिकानां शास्त्रीयमतं किमस्ति ?

(ख) आदिशङ्कराचार्यः बृहदारण्यकोपनिषद्भाष्ये किमुक्तवान् ?

(ग) विष्णुपुराणस्य रचनाकालः कः अनुमीयते ?

(घ) पश्चात्तनं पुराणं किम् ?

(ङ) कुत्र कुत्र पुराणशब्दस्य प्रयोगो दृश्यते ?

## ७. अनुच्छेदं श्रुत्वा उत्तरं वदत

अधुना जनानाम् अभिरुचिः स्वकीये प्राचीने वाङ्मये नास्ति । जीवनस्योद्देश्यं विद्यानामार्जनं नास्ति, धनार्जनमेवोद्देश्यं वर्तते । तस्मात् जनानां प्रवृत्तिः केवलमर्थकरीषु विद्यास्वेव समवाप्यते । विद्याविषयिण्या अनुरक्तेरभावात् पुराणेषु सन्निहितानि तत्त्वानि जनानां मेधां मार्गयन्ती न दृश्यते । वैदेशिकशिक्षापद्धत्याः प्रभावेण वयं परविश्वासपरायणाः सञ्जाताः । साम्प्रतं वयं कोलाहलं श्रुत्वा काकं प्रति धावामः, स्वस्य कर्णौ न स्पृशामः । अधुना विद्यालयेषु शास्त्रीयाणां विषयाणामध्ययनं प्रायः न दृश्यते । जनानामभिरुचिः वैदेशिकाषु भाषासु संस्कृतिषु च दृश्यते । इदानीं न चिन्ता शास्त्रेषु, न निग्रहः इन्द्रियेषु, न श्रमो विद्यासु, न अनुरक्तिस्तपःसु न च स्पृहा सत्कर्मसु विलोक्यते ।

(क) आधुनिकजनानां प्रवृत्तिः कुत्र अस्ति ? (ख) वयं कथं परविश्वासपरायणाः सञ्जाताः ?

(ग) जनानामभिरुचिः कुत्र दृश्यते ? (घ) जीवनस्योद्देश्येन किं भवितव्यम् ?

(ङ) अनुच्छेदस्याशयः कः ?

अहिले प्राचीन वाङ्मयमा मानिसहरूको रुचि छैन । विद्या आर्जन गर्नु होइन, धन आर्जन गर्नु जीवनको उद्देश्य छ । त्यसकारण मान्छेहरूको स्वभाव धन कमाउने पढाइतिर मात्रै पाइन्छ । विद्याप्रतिको अनुरागको अभावले पुराणमा रहेका तत्त्वहरूले मानिसका मस्तिष्कहरूलाई पछ्याएको देखिँदैन । वैदेशिक शिक्षापद्धतिको प्रभावले हामी अर्काको विश्वास गर्ने भएका छौँ । अहिले हामी हल्ला सुनेर कागतिर दौडन्छौँ, कान छाम्नतिर लाग्दैनौँ । अहिले विद्यालयहरूमा शास्त्रीय विषयहरूको अध्ययन प्रायः देखिँदैन । मानिसको विदेशी भाषा र संस्कृतिमा रुचि देखिन्छ । अहिले शास्त्रको विषयमा चिन्ता छैन, इन्द्रियहरूमा नियन्त्रण छैन, पढाइमा परिश्रम छैन, तपस्यामा अनुराग छैन, सत्कर्ममा चासो छैन ।

**८. पाठस्य प्रथमम् अनुच्छेदं श्रुत्वा उत्तरं वदत**

(क) किं पौराणिकं वाङ्मयं भवति ?

(ख) अधुना पौराणिकं वाङ्मयं किं बोधयति ?

(ग) पौराणिकं पदं कमर्थं बोधयति ?

(घ) वाङ्मयमिति शब्दस्यार्थः कः ?

(ङ) पौराणिकपदस्य प्राचीननवीनयोरर्थयोः को भेदः ?

**९. अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' इति वदत, असत्यवाक्ये 'नहि नहि' इति वदत**

(क) पुराणानि उपास्यदेवानां वर्णनं कुर्वन्ति । ....................

(ख) वंशवृत्तस्य वर्णनं पुराणानां वैशिष्ट्यं नास्ति । ....................

(ग) पुराणेषु कालचिन्तनं न प्राप्यते । ....................

(घ) मनोरारभ्य देवदानवराजर्षिमुन्यादीनां वंशविवरणं पुराणेषु उपलभ्यते । ............

**१०. पाठस्यान्तिमम् अनुच्छेदं श्रुत्वा स्वभाषायामर्थं वदत ।**

**११. श्रवणपाठं श्रुत्वा प्रश्नान् उत्तरयत**

**(क) श्रवणपाठं श्रुत्वा उत्तरं सत्यम् असत्यं वा इति वदत**

(अ) नेपालेऽपि तन्त्रशास्त्रस्य ग्रन्थाः लिखिताः सन्ति ।

(आ) अथर्ववेदस्य मारणमोहनोच्चाटनादिविषयास्तन्त्रसाधनाया आधारबीजानि सन्ति ।

(इ) शब्दकोशेषु तन्त्रशब्दस्य सप्तत्रिंशदर्थाः प्राप्यन्ते ।

(ई) तन्त्रं साधकानां प्राणान् रक्षति ।

(उ) वेदः आगमः कथ्यते ।

**(ख) श्रवणपाठं श्रुत्वा उत्तरं वदत**

(अ) तन्त्रस्य मुख्याः त्रयो भागाः के ?

(आ) त्रवर्णः कमर्थं बोधयति ?

(इ) अस्माकं शास्त्रं कस्य कृते पूजाविधिं निर्दिशति ?

(ई) निगमः किं बोधयति ?

(उ) आदिशङ्कराचार्यः कतीनां तन्त्राणां नामानि गणयामास ?

## पठनम्

**१. पाठस्यानुच्छेदानामेकैकशः सस्वरं पठनं कुरुत, प्रत्येकमनुच्छेदस्य पठनकालं च विचारयत ।**

**२. पाठस्य प्रथममनुच्छेदं पठित्वा पौराणिक–वाङ्मयस्य विषये विमर्शं कुरुत ।**

**३. पाठस्य अन्तिममनुच्छेदं पठित्वा नैपालकसमाजे पौराणिकवाङ्मयस्य प्रभावविषये दश वाक्यानि वदत ।**

**४. पाठं पठित्वा पुराणानाम् उपपुराणानाम् औपपुराणानां च तालिकां निर्मापयत ।**

**५. अनुच्छेदं पठित्वा प्रश्नानाम् उत्तराणि वदत**

यदा मानवस्य सद्भावोऽपि नासीत् पुराणानि तस्यापि कालस्य इतिहासं निगदन्ति ।

यस्मिन् समये साक्षराणां जनानां सङ्ख्या अल्पीयसी आसीत्, मुद्रणकलायाः प्रादुर्भावः न जातस्तदापि विद्वांसः आत्मप्रेरिता राजप्रेरिताश्च भूत्वा पुराणानि हस्तेन लिलिखुः । इत्थं ते तद्रक्षायां सततं सावधाना एव अदृश्यन्त । एवञ्च ते शास्त्रपुराणादीनां श्रवणस्य समीचीनां व्यवस्थां कृतवन्तः । ते जनतायाः चरितमुन्नयितुं सच्चरित्रोत्थापिनीं नीतिमबलम्बितवन्तः, नानाख्यानकथनकारीणीं पद्धतिं च सञ्चाल्य आदर्शमार्गं दर्शितवन्तः । मतमतान्तरसङ्घर्षेभ्यो जनतामाकृष्य ते तां सनातनधर्मं प्रति नीतवन्तः । नानाविधनास्तिकताभ्यो मानवान् संरक्ष्य ते तान् मानवधर्ममुपदिष्टवन्तः । कल्याणलाभाय ते अज्ञजनानां कृते सकलसुन्दरपथं च निर्दिष्टवन्तः । एतत्समग्रमप्यायोजनं पुराणविदः समुत्कृष्टेन विधिनानुष्ठितवन्तः । तदानीं दीर्घदीर्घतरसमयव्यापीनि सत्राणि अन्वष्ठीयन्त । सत्रेषु च तेषु दूरदूरतरस्थानेभ्य आगत्य विपश्चितः ऋषयो मुनयश्च विभिन्नेषु शास्त्रीयेषु पौराणिकेषु च विषयेषु जनश्रेयोविधायकानि प्रवचनानि चक्रुः ।

(क) पुराणानि कीदृशमितिहासं निगदन्ति ?

(ख) मुद्रणकलायाः प्रादुर्भाभावे विद्वांसः पुराणरक्षणाय किं कृतवन्तः ?

(ग) सत्रेषु दूरदूरतः के आगच्छन्ति स्म ?

(घ) जनतायाः चरितमुन्नयितुं तदानीन्तनाः विद्वांसः नृपाश्च किं चक्रुः ?

(ङ) पौराणिकाः मानवान् कुतः रक्षितवन्तः ?

जहिले मानजीवनको अस्तित्व थिएन पुराणले त्यसबेलाको पनि इतिहास बताउँछन् । जहिले साक्षर मानिस थोरै थिए, मुद्रणव्यवस्था आइसकेको थिएन त्यो बेलामा पनि विद्वान्हरू आफैँले र राजाका प्रेरणाले पनि पुराणहरू हातले लेखे । यसरी उनीहरू पुराणको रक्षाका लागि सावधान देखिए । उनीहरूले शास्त्र तथा पुराणहरूको सुन्ने राम्रो व्यवस्था गरे । उनीहरूले जनताको चरित्रको सुधारका लागि सच्चरित्रलाई उकास्ने थिती बसाले । उनीहरूले विविध कथा भन्ने शैली विकास गरेर आदर्शको बाटो देखाए । मत मतान्तरको मन्थनबाट जनताहरूलाई आकर्षित गरेर मानव धर्मतिर ल्याए । अनेकथरीका नास्तिकताबाट मानिसलाई बचाएर उनीहरूलाई मानव धर्मको उपदेश गरे । कल्याण गर्न अज्ञानीका लागि असल बाटो देखाइदिए । यो सबै आयोजना पुराणका ज्ञाताले उत्कृष्ट तरिकाले सम्पन्न गरे । त्यतिखेर लामा लामा यज्ञ सञ्चालन गरिए । ती यज्ञमा टाढा टाढाबाट आएर ऋषि, मुनि र विद्वान्ले विभिन्न शास्त्रीय र पौराणिक विषयमा जनकल्याण गर्ने प्रवचन गरे ।

## लेखनम्

१. **पाठप्रवेशस्य श्रुतलेखनं कुरुत ।**

२. **अधस्तनपदानि प्रयुज्य वाक्यरचनां कुरुत**

सत्त्वगुणप्रधानानि, मतैक्यम्, आपस्तम्बसूत्रम्, ब्रह्मवैवर्तपुराणम्, प्रविष्टिक्रमः, सहिष्णुता

३. **एकवाक्येन उत्तरं लिखत**

(क) व्यासप्रणीतानि पुराणानि कति सन्ति ?

(ख) पश्चात्तनस्य पुराणस्य नाम किम् ?

(ग) पुराणानामभीष्टं किं दृश्यते ?

(घ) मत्स्यपुराणं किं पुराणमिति उल्लिखति ?

(ङ) सर्गश्च प्रतिसर्गश्च इति श्लोकस्य अन्तिमं चरणं किम् ?

४. **सप्तभिर्वाक्यैः पाठस्य प्रथमद्वितीययोः अनुच्छेदयोः सारं लिखत ।**

५. **व्याख्यां कुरुत**

(क) पुराणानि विविधैराधारैः वर्गीकृतानि सन्ति ।

(ख) पुराणानि समन्वयप्रधाना ग्रन्थाः सन्ति ।

६. **विद्यायाः महत्त्वम् इति विषये अनुच्छेदमेकं लिखत ।**

७. **शिक्षकेण सह परामृश्य श्रीमद्भागवतस्य विषये पञ्च वाक्यानि लिखत ।**

८. **परस्परं विमृश्य अधस्तनयोः श्लोकयोः भावार्थं लिखत**

मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तरीणि च ।
वंशानुचरितं चैव पुराणं पञ्च लक्षणम् ॥

## व्याकरणनुशीलनम्

१. उदाहरणं दृष्ट्वा एध् धातोः रूपाणां सारिणीं पूरयत

| लभ्-धातोः रूपाणि | वर्तमानकालः(लट्लकारः) | भूतकालः(लङ्लकारः) |
|---|---|---|
| प्रथमपुरुषस्य एकवचने | लभते | अलभत |
| प्रथमपुरुषस्य द्विवचने | लभेते | अलभताम् |
| प्रथमपुरुषस्य बहुवचने | लभन्ते | अलभन्त |
| द्वितीयपुरुषस्य एकवचने | लभसे | अलभथाः |
| द्वितीयपुरुषस्य द्विवचने | लभेथे | अलभेथाम् |
| द्वितीयपुरुषस्य बहुवचने | लभध्वे | अलभध्वम् |
| तृतीयपुरुषस्य एकवचने | लभे | अलभे |
| तृतीयपुरुषस्य द्विवचने | लभावहे | अलभावहि |
| तृतीयपुरुषस्य बहुवचने | लभामहे | अलभामहि |

| एध्-धातोः रूपाणि | वर्तमानकालः(लट्लकारः) | भूतकालः(लङ्लकारः) |
|---|---|---|
| प्रथमपुरुषस्य एकवचने | | |
| प्रथमपुरुषस्य द्विवचने | | |
| प्रथमपुरुषस्य बहुवचने | | |
| द्वितीयपुरुषस्य एकवचने | | |
| द्वितीयपुरुषस्य द्विवचने | | |
| द्वितीयपुरुषस्य बहुवचने | | |
| तृतीयपुरुषस्य एकवचने | | |
| तृतीयपुरुषस्य द्विवचने | | |
| तृतीयपुरुषस्य बहुवचने | | |

२. लभ्-वञ्च्-एध्-लज्ज्-म्रि-वृत्-जन्-शुभ्-सह्-क्षम्-धातूनां लङ्लकारस्य रूपाणि प्रयुज्य दश वाक्यानि रचयत ।

३. अधोलिखितवाक्यानि पठित्वा सङ्ख्यावाचकविशेषणपदानि रेखाङ्कितानि कुरुत

अस्यां श्रेण्यां द्वाषष्टिश्छात्राः सन्ति ।

अष्टाचत्वारिंशता युक्ता द्वात्रिंशदशीतिर्भवति ।

मम चत्वारि सहस्राणि पञ्चदश च स्वर्णमुद्राः सन्ति ।

त्रिशताधिकसहस्रं जनानामुपस्थिति आसीत् ।

विक्रमवत्सराणां चतुरुत्तरे सहस्रद्वये गते मम पिता अजायत ।

४. **अधोलिखितवाक्यानि पठित्वा सङ्ख्यावाचकविशेषणप्रयोगविषये विमर्शं कुरुत**

अत्र त्रयो नेतारः आगताः आसन् ।

तिस्रः गावः घासं न खादन्ति ।

त्रीणि पदानि तत्र लुप्तानि ।

मम गुरुः चतुर्णामेव वेदानामर्थं वेत्ति ।

मम गुरुः चतसृणामेव श्रुतीनामर्थं जानाति ।

मम गुरु चत्वारि शास्त्राणि आनेतुमुक्तवान् ।

उपरिलिखितवाक्येषु अधोरेखाङ्कितानि पदानि सङ्ख्यावाचकविशेषणानि सन्ति । तानि च पदानि विशेष्यस्य लिङ्ग-वचन-विभक्त्यनुसारीणि भवन्ति । तानि पदानि प्रयुज्य नवीनानि दश वाक्यानि रचयत ।

५. **सङ्ख्यावाचकविशेषणपदानि प्रयुज्य एकमनुच्छेदं रचयत ।**

## रचनात्मकः अभ्यासः

१. **अधोलिखितनिर्देशनानुसारेण आत्मना पठितस्य सर्वप्राचीनग्रन्थस्य विषये अनुच्छेदमेकं रचयत**

| | | |
|---|---|---|
| लेखकः - | मूल्यम् - | विशेषता: - |
| रुचिकरवाक्यानि - | महत्त्वम् - | कथानकम् - |

२. **विद्यालयस्थानां भवन-छात्र-शिक्षक-उद्यानादीनां सङ्ख्यागणनपुरःसरं दशभिर्वाक्यैः स्वविद्यालयस्य वर्णनं कृत्वा लिखत ।**

## श्रवणपाठः

तन्त्रशास्त्रं प्रसिद्धं प्राचीनं वाङ्मयं वर्तते । शब्दकोशेषु तन्त्रशब्दस्य सप्तत्रिंशदर्थाः प्राप्यन्ते । तन्यते विस्तार्यते ज्ञानमनेन इति तन्त्रं भवति । तनुशब्दस्यार्थः शरीरम् । त्रवर्णस्त्राता इत्यर्थं बोधयति । इत्यतस्तनुस्त्रायतेऽनेन इत्यपि तन्त्रशब्दस्यार्थो भवति । तन्त्रं साधकानां प्राणान् रक्षति । तनवे यन्महत्त्वं ददाति तदपि तन्त्रं बोद्धव्यमिति इतरार्थोऽपि क्रियते । तन्त्रमुपासनापद्धतेर्महत्त्वपूर्णमङ्गं वर्तते । एतस्यापरं नाम 'आगमः' इत्यस्ति । आगमः शिवमुखान्निःसृत इति भणितिरस्ति । वेदो 'निगमः' कथ्यते । निगमः कर्म, उपासना, ज्ञानस्य च स्वरूपं बोधयति । आगमस्तद्-भिन्नोऽस्ति । आगमः भोगमोक्षयोः उपायान् प्रदर्शयति । अस्माकं शास्त्रं चतुर्णां युगाानां कृते पूजाविधिं निर्दिशति । सत्ययुगाय वैदिकविधिः, त्रेतायुगाय स्मार्तविधिः, द्वापरयुगाय पुराणोपासना, कलियुगाय च तान्त्रिकोपासना निर्णीताः सन्ति । तन्त्रस्य मुख्यरूपेण त्रयो भागा वर्तन्ते - बौद्धः, जैनः, ब्राह्मणश्च । ब्राह्मणभागः पुनस्त्रिषु भागेषु विभक्तोऽस्ति - वैष्णवागमः, शैवागमः, शाक्तागमश्च । तन्त्रशास्त्राणि अनेकानि सन्ति । आदिशङ्क-राचार्यस्चतुःषष्टेस्तन्त्राणां नामानि गणयामास । अथर्ववेदस्य मारण-मोहनोच्चाटनादिविषयास्तन्त्रसाधनाया आधारबीजानि मन्यन्ते । पञ्चमकारस्य प्राधान्यं वामाचारस्यानुसरणञ्च तन्त्रसाधनाया महत्त्वाधायकपक्षो निभाल्यते । नेपालेऽपि तन्त्रशास्त्रस्य ग्रन्था लिखिताः सन्ति । अत्र पुरा बहवस्तन्त्रविद्यासाधका आसन्, इदानीं च सन्ति ।

# चतुर्थः पाठः

## पाठप्रवेशः

# सिकागोसम्मेलनम्

अमेरिकादेशस्य सिकागोनगरे १८९३ ईशवीयाब्दे प्रथमं विश्वधर्मसम्मेलनम् आयोजितम् आसीत् । सेप्टेम्बरमासस्य एकादशदिनाङ्काद् आरभ्य सप्तविंशतिदिनाङ्कपर्यन्तं तस्य सम्मेलनस्य आयोजना अभवत् । तस्मिन् सम्मेलने स्वामी विवेकानन्दो भागं ग्रहीतुम् अगच्छत् । शिष्यसङ्कलितानि कानिचिद् रूप्यकाणि आदाय स सिकागोनगरं प्रति प्रस्थानमकरोत् । तत्र च विशेषसंस्थाया अनुमोदनपत्राभावेऽपि एकस्य दयालोः संसर्गेण स सहभागितायै समर्थोऽभवत् । सम्भाषणस्य सम्बोधने एव एतेन तत्रत्या परम्परा नैव स्वीकृता । स उक्तवान्, "अमेरिकादेशस्य प्रियाः भ्रातरः, भगिन्यश्च" । तस्य सम्बोधने 'महिलाः भद्रपुरुषाश्च' इति पदावली नासीत् । एतादृशेन सम्बोधनेन सर्वेऽपि तत्रोपस्थिताः स्तब्धा जाताः । तस्य तत्सम्भाषणस्य महत्त्वपूर्णानि कथनानि अधो लिखितानि सन्ति, पठत ।

१. अहं संसारस्य सर्वप्राचीनायाः परम्परायाः अनुयायी अस्मि ।

२. रोमनसाम्राज्यस्य निरङ्कुशशासनव्यवस्थया यहुदीजनानां मन्दिराणां ध्वंसो यदा विहितस्तदा मत्क्षेत्रीया जनाः तेषां गुरूणां कृते ससम्मानम् आवासस्य प्रबन्धम् अकुर्वन् ।

३. जोरोस्टरस्य अनुयायिनः अग्निपूजकाः जन्मभूमौ निवस्तुम् असमर्थाः सन्तः तां परित्यज्य यदा पलायिता आसन् तदा मम समाजः तान् स्वातन्त्र्येण स्वकृत्यानि सम्पादयितुं व्यवस्थाम् अकरोत् ।

४. मम संस्कृतौ ईश्वरस्य आराधनायां कट्टरता नास्ति । उक्तम् च -

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ श्रीमद्भगवद्गीता

५. सम्प्रदायवादः, असहिष्णुता एवं तदुत्तराधिकारिणां हठधर्मितादयः हिंसायाः हेतवः भवन्ति । एतेन द्वन्द्वः जायते, रक्तपातश्च भवति ।

६. धर्मान्तरणं मानवानां स्वतन्त्रतां हन्ति, अशान्तिं च जनयति । अनेन विश्वस्य अनेकाः संस्कृतयः सभ्यताश्च विनश्यन्ति, नश्यमानाश्च सन्ति ।

विवेकानन्दस्य तात्कालिकं प्रवचनं विश्वबन्धुतायाः विषये जागरणसूत्रं मन्यते ।

अमेरिकाको सिकागो सहरमा सन् १८९३ मा पहिलो विश्वधर्म सम्मेलनको आयोजना भयो । सेप्टेम्बरको ११ तारिखबाट सुरु भएर २७ तारिखसम्म उक्त सम्मेलन चलेको थियो । त्यस सम्मेलनमा स्वामी विवेकानन्द भाग लिन गए । चेलाले सङ्कलन गरेको केही रूपियाँ लिएर उनी सिकागो प्रस्थान गरे । त्यहाँ विशेष संस्थाको समर्थनपत्रको अभावमा पनि एक दयालुको सम्पर्कले उनी सहभागिताका लागि समर्थ भए । भाषणको सम्बोधनमा नै उनले त्यहाँको परम्परा स्वीकार गरेनन् । उनले भने, "अमेरिकाका प्यारा दाजुभाइ तथा दिदीबहिनीहरू !" उनको सम्बोधनमा 'महिला तथा सज्जनवृन्द' यस्तो पदावली थिएन । यस्तो सम्बोधनले त्यहाँ उपस्थित सबै स्तब्ध भए । उनको भाषणका महत्त्वपूर्ण भनाइहरू तल लेखिएका छन्, पढौँ ।

१. *म संसारको सबैभन्दा पुरानो परम्पराको अनुयायी हुँ ।*

२. *जतिखेर रोमन साम्राज्यको निरङ्कुश शासन व्यवस्थाले यहुदीका मन्दिर भत्किएका थिए त्यतिखेर मेरो क्षेत्रका मानिसले उनीहरूका गुरुलाई सम्मानपूर्वक आवासको व्यवस्था गरे ।*

३. *जोरोस्टरका अनुयायी अग्निपूजक जन्मभूमिमा बस्न नसकेर जन्मभूमि छोडेर जतिखेर भागे त्यतिखेर मेरो समाजले उनीहरूलाई स्वतन्त्रतापूर्वक आफ्ना काम गर्ने व्यवस्था गर्‍यो ।*

४. *मेरो संस्कृतिमा ईश्वरको आराधनामा कट्टरता छैन । भनिएको पनि छ -*

*हे अर्जुन ! जो जसरी मलाई मान्छन्, सेवा गर्छन्, तिनीहरूलाई म त्यसरी नै लिने गर्दछु, अनुग्रह गर्दछु । सबै प्रकारले मानिस मेरै बाटोमा चल्ने गर्दछन् । श्रीमद्भगवद्गीता*

५. *सम्प्रदायवाद, असहिष्णुता र उनीहरूका उत्तराधिकारीको जिद्दीपना हिंसाका कारण हुने गर्दछन् । यसबाट द्वन्द्व उत्पन्न हुन्छ र रक्तपात हुने गर्दछ ।*

६. *धर्मान्तरणले मानिसको स्वतन्त्रतालाई नष्ट गर्दछ र अशान्तिको सिर्जना गर्दछ । यसबाट विश्वका धेरै संस्कृति र सभ्यता नष्ट हुन्छन्, नष्ट हुँदै गइरहेका पनि छन् ।*

विवेकानन्दको त्यतिखेरको प्रवचन विश्वबन्धुत्वका विषयमा जागरणको सूत्र मानिन्छ ।

मूलपाठः

# विश्वबन्धुत्वम्

**(रामलालः थापामगरः नवीनजङ्गः ठकुरी च प्रतिवेशिनौ आस्ताम्। एकदा तयोः भूमेः सीमाविषये विवादो जातः। तदा एव विद्यालयस्य शिक्षिका सीता राई गृहं गन्तुकामा तत्र प्राप्नोति। ततस्तेषां वार्ता प्रचलति।)**

**सीताः** नमस्कारः। का वार्ता अद्य ? किमर्थं सक्रोधं वचनं श्रूयते ? अहं विवादसमाधानाय साहाय्यं कर्तुं शक्नवानि ?

**रामलालः** नमस्कारः। नवीनः मम भूमौ शाकस्य बीजं वपमानः अस्ति। अहं कथं तूष्णीं स्थातुं शक्नोमि ?

**नवीनः** तथा नास्ति। एषा मम एव भूमिरस्ति।

**सीता :** तथा विवादं मा कुरुताम्। भूमिमापकम् आहूय सीमाविषये निश्चयं कर्तुं शक्नुमो वयम्।

**रामलालः** तत्तु समीचीनमेव। परन्तु नवीनः मम कथनमेव न शृणोति। एष परामर्शमेव न करोति।

**नवीनः** रामलालः मम बीजानि उद्धृत्य मार्गे प्रक्षिपति। अहं कथं शृणवानि एतस्य कथनम् ?

**सीता** अहो ! क्षणं शृणुतम्। प्रतिवेशी तु बन्धुः भवति। यः सुखे दुःखे च साहाय्यं करोति स एव बन्धुरिति कथ्यते। समाजः विश्वबन्धुत्वं कामयति। भवन्तौ च परस्परं बन्धुत्वं कामयेताम्। बन्धुत्वभावनया विश्वशान्तिः सम्भवति।

**रामलालः** तत् कथं सम्भवति सीतामहोदये ?

**सीता** प्रथमविश्वयुद्धेन संसारस्य महती क्षतिः जाता। द्वितीयविश्वयुद्धेन च विश्वस्मिन् बहवो मानवाः हताः। तस्य हानिं निराकर्तुं प्रथमविश्वयुद्धानन्तरं राष्ट्रसङ्घस्य स्थापना अभवत्। परन्तु तत्सङ्घः पूर्णतया कार्यं कर्तुं समर्थो नाभवत्। द्वितीयविश्वयुद्धानन्तरं संयुक्तराष्ट्रसङ्घस्य स्थापना अभवत्। नेपालः अपि तस्य सदस्यः अस्ति।

**नवीनः** एतेन किं भवति ?

**सीता** एतेन विश्वस्मिन् शान्तेः स्थापना भवति । विश्वबन्धुत्वस्य भावना च वर्धते ।

**रामलालः** विश्वबन्धुत्वं किं सृजति ?

**सीता** विश्वस्य मानवाः परस्परं बन्धुत्वस्य भावनया व्यवहरन्ति चेत् सर्वेषां कल्याणमेव भवति । एको बन्धुः अपरस्य भावनायाः, आस्थायाः, संस्कृतेश्च सम्मानं करोति । परस्परं सद्भावो वर्धते । शस्त्रास्त्राणां विकासेन भयमेधमानः दृश्यते । जगति भयमशान्तिं जनयति । एतेन कोऽपि मानवः सुखेन जीवनं यापयितुं न शक्नोति ।

**नवीनः** तर्हि सुखेन जीवनं यापयितुं किं कर्तव्यम् ?

**सीता** सुखेन जीवनं यापयितुं परस्परं सद्भावस्य आवश्यकता भवति । सद्भावो बन्धुत्वेन सम्पद्यते । यो मनुष्यः 'अयं मम तच्च अपरस्य' इति भावनया व्यवहरति, स लघुचेताः कथ्यते । यश्च उदारचरितः अस्ति, तस्य कृते संसारस्य सर्वेऽपि मानवाः बन्धुसमानाः सन्ति । उक्तञ्च -

अयं निजः परो वेति गणना लघुचेतसाम् ।

उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

**रामलालः** विश्वबन्धुतायाः उदाहरणानि प्राप्यन्ते किमु ?

**सीता** कथं न प्राप्यन्ते उदाहरणानि ? अधुना संसार एव एको ग्राम इव परिलक्ष्यते । देशानां सङ्गठनानि सन्ति । व्यापारस्य, व्यवहारस्य, शान्तिसंस्थापनस्य, आतङ्कवादनिराकरणस्य च कृते विश्वस्य सर्वे देशाः परस्परं सहयोगं कुर्वन्ति । अपराधिनं बन्धीकृत्य समर्पयन्ति । बालानां, वृद्धानाम्, समस्तमानवानां च अधिकारविषये निश्चयं कृत्वा नीतिनिर्माणं कुर्वन्ति । तस्य परिपालनाय सहमतिः भवति । मानवाधिकारस्य, पशूनामधिकारस्य च विषये आयोगानां गठनं कुर्वन्ति ।

**नवीनः** आयोगाः किं कुर्वन्ति ?

**सीता** आयोगाः अधिकारस्य विषये चेतनामूलकान् कार्यक्रमान् आयोजयन्ति । विवरणं प्रस्तुवन्ति । यत्र अधिकारस्य हननं भवति, तत्र गत्वा अधिकारस्य सुनिश्चयं कारयन्ति । यदि वयं विश्वस्य सर्वैः मानवैः सह बन्धुत्वेन व्यवहरामस्तर्हि कलहस्य,

युद्धस्य, आतङ्कस्य च विनाशः सुनिश्चितो भवत्येव । एतेन विश्वस्मिन् शान्तेः स्थापना भवति । विदेशेषु गत्वा अपि मानवः नीतिनियमान् पालयन् कार्यं कर्तुम्, अनुसन्धानं कर्तुम्, जीवनं यापयितुं च समर्थो भवति ।

**रामलालः** तेनैव कारणेन साम्प्रतम् एकस्य देशस्य मानवः अपरस्मिन् देशे जीवनं यापयितुं समर्थोऽस्ति । अन्यत्रैव निवस्तुं च सक्षमोऽस्ति । अध्ययनाय, व्यापारस्य प्रयोजनाय, भ्रमणाय, अनुसन्धानाय च एकस्य देशस्य नागरिकः अन्यं देशं गन्तुं शक्नोति । यदि विश्वबन्धुत्वस्य भावना न भवति चेत् अन्तरराष्ट्रियसंस्थानां विकासः एव न सम्भवति । ताः संस्थाः कार्यं कर्तुमपि न शक्नुवन्ति ।

**सीता** आम्, भवता सुष्ठु उक्तम् । अधुनापि एकस्य देशस्य कर्मकरा विदेशेषु गत्वा जीविकायै कार्यं कुर्वन्तः सन्ति । एतद् ज्ञात्वा भवन्तौ कथं कलहं कुरुतः ? कलहं मा कुरुताम् । कलहो विनाशाय भवति, न तु विकासाय । वयम् अवलोकयामहै, सहयोगेन, सद्भावेन च वयं सुखपूर्वकं जीवनं यापयन्तः स्मः । यदि परस्परं बन्धुत्वस्य भावना न भवति चेत् समाजे, राष्ट्रे च अशान्तिरेव भवति । अशान्तिः आनन्दस्य बाधिका अस्ति । अतः एव कलहं परित्यज्य समस्यायाः समाधानं कर्तव्यम् ।

**नवीनः** आवयोः विवादः आवयोः हानये एव भवति । रामलाल ! संसारः एव परिवारः वर्तते । आवां तु प्रतिवेशिनौ स्वः । अतः भूमिमापनेन कस्य भूमेः सीमा कुत्रास्ति इति निश्चेतव्यम् । विश्वस्य मानवाः परस्परं सहयोगं कुर्वन्ति चेत् आवां किमर्थं मेलितुं न शक्नुवः ?

**रामलालः** सम्यग् उक्तं त्वया । बन्धुत्वस्य भावनया एव विश्वस्य हितं भवति ।

**सीता** भवद्भ्यां परस्परं विमर्शं कृत्वा व्यवह्रियेत । गृहेऽपि कार्यमस्ति । अधुना विलम्बः जायमानः अस्ति । अहं गच्छानि किम् ?

**उभावेव** गम्यताम् । धन्यवादः भवत्यै । आवामपि स्वकार्ये निरतौ स्वः । भवत्या सह पुनर्मेलिष्यावः ।

(सीता गृहं प्रति गच्छति । रामलालः नवीनश्च गार्हस्थ्यं कार्यं कर्तुं प्रारभेते ।)

**(रामलाल थापामगर र नवीनजङ्ग ठकुरी छिमेकी थिए। एकपटक ती दुईको जग्गाको सिमानाको विषयमा विवाद भयो। त्यतिखेर नै घर जान लागेकी विद्यालयकी शिक्षिका सीता राई त्यहाँ पुग्छिन्। त्यसपछि उनीहरूको कुराकानी हुन्छ।)**

**सीता :** नमस्कार। के कुराकानी हुँदै छ आज ? किन यस्तो क्रोधयुक्त बोली सुनिन्छ ? के म विवादको समाधानका लागि केही सहयोग गर्न सक्छु र ?

**रामलाल :** नमस्कार। नवीन मेरो जग्गामा सागको बिउ रोप्दै छ। म कसरी चुप लागेर बस्न सक्छु ?

**नवीन :** त्यस्तो होइन। यो मेरै जग्गा हो।

**सीता :** त्यस्तो विवाद नगर्नुहोस्। अमिनीलाई बोलाएर हामी सिमानाको विषयमा निर्णय गर्न सक्छौँ नि।

**रामलाल :** त्यो त राम्रै कुरा हो तर नवीनले मेरो कुरा नै सुन्दैन। यसले सल्लाह नै गर्दैन।

**नवीन :** रामलालले मेरा बिउहरू उखेलेर बाटामा फ्याल्छ। म यसको कुरा कसरी सुनूँ ?

**सीता :** तपाईंहरू सुन्नुहोस् त। छिमेकी त बन्धु हो। जसले सुखदुःखमा सहयोग गर्छ उसलाई नै बन्धु भनिन्छ। समाजले विश्वबन्धुत्वको कामना गर्दछ। तपाईंहरू पनि एकआपसमा बन्धुत्वको कामना गर्नुहोस्। बन्धुत्वको भावनाले नै विश्वशान्ति सम्भव हुन्छ।

**रामलाल :** त्यो कसरी सम्भव हुन्छ सीताजी ?

**सीता :** पहिलो विश्वयुद्धले संसारमा ठुलो क्षति भयो। दोस्रो विश्वयुद्धले पनि विश्वमा धेरै मानिसहरू मरे। त्यसको हानिको निराकरण गर्न पहिलो विश्वयुद्धपछाडि राष्ट्र सङ्घको स्थापना भयो तर त्यो सङ्घले पूर्ण रूपले काम गर्न सकेन। दोस्रो विश्वयुद्धपछि संयुक्त राष्ट्र सङ्घको स्थापना भयो। नेपाल पनि त्यसको सदस्य छ।

**नवीन :** यसबाट के हुन्छ ?

**सीता :** यसबाट विश्वमा शान्तिको स्थापना हुन्छ। विश्वबन्धुत्वको भावना पनि बढ्छ।

**रामलाल :** विश्वबन्धुत्वले के सृजना गर्दछ ?

**सीता** : विश्वका मानिस परस्पर बन्धुत्वको भावनाले व्यवहार गर्दछन् भने सबैको कल्याण नै हुन्छ । एउटा बन्धुले अर्काको भावना, आस्था र संस्कृतिको सम्मान गर्दछ । परस्परमा सद्भाव बढ्दछ । शस्त्रास्त्रको विकासले डर बढ्दै गएको देखिन्छ । डरले अशान्ति उत्पन्न हुन्छ । यसबाट कुनै पनि मानिस सुखले जीवनयापन गर्न सक्दैन ।

**नवीन** : त्यसो भए, सुखले जीवन यापन गर्न के गर्नुपर्छ ?

**सीता** : सुखपूर्वक जीवन यापन गर्न परस्पर सद्भावको आवश्यकता हुन्छ । सद्भाव बन्धुत्वबाट सहज हुन्छ । जुन मानिस यो मेरो र त्यो अर्काको भन्ने भावनाले व्यवहार गर्दछ त्यसलाई सानो मन भएको भनिन्छ । जो उदार चरित्रको छ, त्यसका लागि संसारका सबै मानिस बन्धुसमान हुन्छन् । भनिएको पनि छ - यो आफ्नो र यो पराई भनेर सानो मन भएकाहरू गणना गर्दछन् । उदार चरित्र भएका मानिसका लागि सारा पृथ्वी नै कुटुम्ब लाग्ने गर्दछ ।

**रामलाल** : के विश्वबन्धुतायाका उदाहरणहरू पाइन्छन् त ?

**सीता** : उदाहरण कसरी नपाइनु ? अहिले संसार नै एउटा गाउँजस्तो भएको छ । देशका सङ्गठनहरू छन् । व्यापार, व्यवहार, शान्ति स्थापना, आतङ्कवाद निराकरणका लागि विश्वका सबै देशहरू परस्पर सहयोग गर्दछन् । अपराधीलाई बन्दी बनाएर अर्को देशलाई सुम्पन्छन् । बालबालिका, वृद्धवृद्धाका साथै सम्पूर्ण मानिसको अधिकारका विषयमा निश्चय गरेर नीतिनिर्माण गर्दछन् । त्यसको पालनाका लागि सहमति हुन्छ । मानव अधिकार र पशु अधिकारका विषयमा आयोगको गठन गर्दछन् ।

**नवीन** : आयोगले के गर्दछन् ?

**सीता** : आयोगले अधिकारका विषयमा चेतनामूलक कार्यक्रमको आयोजना गर्दछन् । विवरण प्रस्तुत गर्दछन् । जहाँ अधिकारको हनन हुन्छ त्यहाँ गएर अधिकारको सुनिश्चितता गराउँदछन् । यदि हामी विश्वका सबै मानिससँग बन्धुत्वको भावनाले व्यवहार गर्दछौं भने कलह, युद्ध, आतङ्कको विनाश सुनिश्चित हुन्छ नै । यसबाट विश्वमा नै शान्तिको स्थापना हुन्छ । विदेश गएर पनि मानिस नीतिनियमको पालना गर्दै काम गर्न, अनुसन्धान गर्न र जीवनयापन गर्न समर्थ हुन्छ ।

**रामलाल :** त्यसकारण अहिले एउटा देशको मानिस अर्को देशमा जीवन यापन गर्न सक्षम छ । अन्तै गएर निवास बनाउन पनि सक्षम छ । अध्ययन, व्यापारिक प्रयोजन, भ्रमण तथा अनुसन्धानका लागि एक देशको नागरिक अर्को देश जान सक्छ । यदि विश्वबन्धुत्वको भावना हुँदैन भने अन्तरराष्ट्रिय संस्थाको विकास नै सम्भव हुँदैन । तिनले काम गर्न सक्दैनन् ।

**सीता :** हो, तपाईंले राम्रो भन्नुभयो । अहिले पनि एक देशको कामदार विदेश गएर जीविकाका लागि काम गर्दै छन् । यो थाहा पाएर तपाईंहरू कसरी झगडा गर्नुहुन्छ ? झगडा नगर्नुहोस् । झगडा विनाशका लागि हुन्छ, विकासका लागि हुँदैन । हामी हेरौं, सहयोग र सद्भावले हामी सुखपूर्वक जीवन यापन गर्दै छौं । यदि परस्पर बन्धुत्वको भावना छैन भने समाज तथा राष्ट्रमा अशान्ति नै हुन्छ । अशान्ति आनन्दको बाधक हो । त्यसैले झगडा छोडेर कुराकानी गरेर समस्याको समाधान गर्नुपर्छ ।

**नवीन :** हाम्रो विवाद हाम्रै हानिका लागि हुन्छ । रामलाल ! संसार नै परिवार हो । हामी त छिमेकी हौं । त्यसैले जग्गा नापेर कसको जग्गाको सिमाना कहाँ छ भन्ने निश्चय गर्नुपर्छ । विश्वका मानिस परस्पर सहयोग गर्दछन् भने हामी किन गर्न सक्दैनौं ?

**रामलाल :** तिमीले ठिक भन्यौ । बन्धुत्वको भावनाले नै विश्वको कल्याण हुन्छ ।

**सीता :** तपाईंहरू सल्लाह गरेर व्यवहार गर्नुहोस् । घरमा पनि काम छ । अहिले ढिलो हुँदै छ । के म जाऊँ ?

**दुवैले :** जानुहोस्, धन्यवाद तपाईंलाई । हामी पनि आफ्ना काममा लागेका हुने छौं । तपाईंसँग फेरि भेट्ने छौं ।

(सीता घर जान्छिन् । रामलाल र नवीन घरायसी काम गर्न सुरु गर्दछन् ।)

## शब्दार्थाः

| | | | |
|---|---|---|---|
| विश्वधर्मसम्मेलनम् | विश्वधर्मसभा | विश्व धर्म सम्मेलन | Parliament of the World's Religions |
| अनुमोदनपत्रम् | समर्थनपत्रम् | समर्थन पत्र | Letter of Recommendation |
| ध्वंसः | विनाशः | विनाश | Demolition |
| प्रबन्धः | व्यवस्था | व्यवस्था | Arrangement |
| स्वातन्त्र्येण | स्वतन्त्रतापूर्वकम् | स्वतन्त्रताले | Freely |
| असहिष्णुता | सहिष्णुताया अभावः | असहिष्णुता | Intolerance |
| हेतवः | कारणानि | कारण | Reasons |
| द्वन्द्वः | विवादः | विवाद | Dispute |
| तूष्णीम् | मौनं | चुपचाप | Quite |
| प्रक्षिपति | प्रक्षेपणं करोति | फ्याल्छ | Throws |
| बन्धुत्वम् | बन्धुता | दाजुभाइको भावना | Brotherhood |
| भयम् | भीतिः | भय/डर | Fear |
| आवश्यकता | अपरिहार्यता | आवश्यकता | Necessity |
| उदाहरणानि | दृष्टान्ताः | नमुना | Examples |
| आतङ्कः | महाभयम् | आतङ्क | Terror |
| सुष्ठु | सम्यक् | राम्रो | Nice |
| आनन्दः | हर्षः | खुसी | Happiness |

## अभ्यासः

### श्रवणं भाषणञ्च

१. **पाठस्य संवादं साभिनयं पठत ।**

२. **अधस्तनान् शब्दान् शिक्षकात् श्रुत्वा शुद्धम् उच्चारयत**

ईशवीयाब्दे, ग्रहीतुम्, स्वातन्त्र्येण, असहिष्णुता, द्वन्द्वः, साहाय्यम्, उद्धृत्य, बन्धुत्वभावनया, लघुचेताः, भयम्, व्यवह्रियताम् ।

३. **मित्रमुखाद् पाठप्रवेशं श्रुत्वा अबुद्धार्थशब्दान् कथयत ।**

४. **सिकागोसम्मेलनस्य महत्त्वपूर्णानि कथनानि श्रुत्वा स्वमातृभाषायां श्रावयत ।**

५. **अधोलिखितानि पदानि श्रुत्वा पाठात् पर्यायवाचिपदानि कथयत**

संवादः, नमस्ते, धरण्याम्, निर्णयम्, विधातुम्, वर्त्मनि, इच्छति, हानिः, मनुजाः, वर्धमाना, अन्यस्य, जन्तूनाम्, समरस्य, समर्थः, उन्नतिः, सम्प्रति, कथितम्, सदने ।

६. **अधोलिखितेषु वाक्येषु प्रयुक्तं पारिभाषिकपदं चिनुत**

(क) तस्य सम्बोधने 'महिलाः भद्रपुरुषाश्च' इति पदावली नासीत् ।

(ख) रोमनसाम्राज्यस्य निरङ्कुशशासनव्यवस्थया यहुदीजनानां मन्दिरस्य ध्वंसो यदा विहितस्तदा मत्क्षेत्रीया जनाः तेषां गुरूणां कृते ससम्मानम् आवासस्य प्रबन्धम् अकुर्वन् ।

(ग) जोरोस्टरमहाभागस्य अनुयायिनः अग्निपूजकाः जन्मभूमौ निवस्तुम् असमर्थाः सन्तः तां परित्यज्य यदा पलायिता आसन्, तदा मम समाजः तान् स्वातन्त्र्येण स्वकृत्यानि सम्पादयितुं व्यवस्थामकरोत् ।

(घ) सम्प्रदायवादः, असहिष्णुता एवम् तदुत्तराधिकारिणां हठधर्मितादयः हिंसायाः हेतवः भवन्ति । एतेन द्वन्द्वः जायते, रक्तपातश्च भवति ।

(ङ) धर्मान्तरणं मानवानां स्वतन्त्रतां हन्ति, अशान्तिं च जनयति । अनेन विश्वस्य अनेकाः संस्कृतयः सभ्यताश्च विनश्यन्ति, नश्यमानाश्च सन्ति ।

(च) भूमिमापकम् आहूय सीमाविषये निश्चयं कर्तुं शक्नुमो वयम् ।

(छ) व्यापारस्य, व्यवहारस्य, शान्तिसंस्थापनस्य, आतङ्कवादनिराकरणस्य कृते विश्वस्य सर्वे देशा परस्परं सहयोगं कुर्वन्ति ।

७. **अधोलिखितं संवादांशं शिक्षकात् श्रुत्वा अस्य सन्देशं कक्षायां विमृशत**

अधुनापि एकस्य देशस्य कर्मकरा विदेशेषु गत्वा जीविकायै कार्यं कुर्वन्तः सन्ति । एतद् ज्ञात्वा भवन्तौ कथं कलहं कुरुतः ? कलहं मा कुरुताम् । कलहो विनाशाय भवति न तु विकासाय । वयम् अवलोकयामहै, सहयोगेन, सद्भावेन च वयं सुखपूर्वकं जीवनं यापयन्तः स्मः । यदि परस्परं बन्धुत्वस्य भावना न भवति चेत् समाजे, राष्ट्रे च

अशान्तिरेव भवति । अशान्तिः आनन्दस्य बाधकः अस्ति । अत एव कलहं परित्यज्य वार्तां कृत्वा समस्यायाः समाधानं कर्तव्यम् ।

८. **अधो लिखितं संवादांशं मित्रात् श्रुत्वा अत्र प्रयुक्तानि अव्ययपदानि वदत**

तेनैव कारणेन साम्प्रतमेकस्य देशस्य मानवः अपरस्मिन् देशे जीवनं यापयितुं समर्थोऽस्ति । अन्यत्रैव निवासं कारयितुं च सक्षमोऽस्ति । अध्ययनाय, व्यापारस्य प्रयोजनाय, भ्रमणाय, अनुसन्धानाय च एकस्य देशस्य नागरिकः अन्यं देशं गन्तुं शक्नोति । यदि विश्वबन्धुत्वस्य भावना न भवति चेत् अन्तरराष्ट्रियसंस्थायाः विकास एव न सम्भवति । ताः कार्यं कर्तुं न शक्नुवन्ति ।

९. **प्रदत्तं श्लोकं श्रुत्वा सखिभिः सह आशयं विमृशत**

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।

देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥

तीर्थादि उचित स्थानमा र उचित समयमा योग्य पात्रलाई प्रत्युपकारको भावना नराखी अर्थात् कुनै लाभ हुने आशा नराखी दिइने दानलाई सात्त्विक दान भनिन्छ ।

१०. **श्रवणपाठं श्रुत्वा एकवाक्येन उत्तरं दत्त**

(क) किमर्थं स्वच्छता आवश्यकी भवति ?

(ख) रिक्तस्थानेषु किं कर्तव्यम् ?

(ग) कः वायुमण्डलं दूषयति ?

(घ) कस्य प्रयोगेण यानादिकं चालयितव्यम् ?

(ङ) सर्वैः किं ज्ञातव्यम् ?

## पठनम्

१. **अधोलिखितं गद्यांशं पठित्वा शीर्षकं वदत**

फ्लोरेन्स-नाइटिङ्गेलमहाभागा प्रथमा स्वास्थ्यपरिचारिका अस्ति । तदानीं

स्वास्थ्यपरिचारिकायाः कार्यं तथा प्रतिष्ठितं न मन्यते स्म । तस्याः पितरौ तामस्यां वृत्तौ द्रष्टुं नेच्छतः स्म परन्तु सा मानवानां कल्याणं वाञ्छति स्म । क्रिमियायुद्धे शिविरेषु गत्वा एषा आर्तानामुपचारम् अकरोत् । रोगिणां दुःखं दृष्ट्वा एषा दुःखिता अभवत् । तेषां सौख्यम् अनुभूय एषा हर्षिता अभवत् । अन्येषाम् उपकरणार्थमेव जीवनं समर्प्य विश्वबन्धुतायाः अनुपमम् उदाहरणमेषा प्रास्तौत् । यदा सा आर्तान् द्रष्टुं वाञ्छति स्म तदा एषा दीपं नीत्वा तेषां प्रकोष्ठेषु गच्छति स्म । अत एव ते एतां 'दीपयुक्ता नारी' इति कथयितुं प्रारभन्त । तत्पश्चाद् एषा तदुपनाम्ना परिचिता अभवत् । मानवसेवायां निरता एषा सकलान् मानवान् 'सेवा हि परमो धर्मः' इति अशिक्षयत् । एतस्याः महत्त्वपूर्णानि कानिचित् कथनानि अधः सन्ति, "अहं कदापि कारणानि प्रदर्श्य स्वकार्याद् विमुखा नाभवम् । एतदेव मम सफलतायाः रहस्यं वर्तते । अहं विश्वसिमि यद्, महान् नायकः स भवति, यः गार्हस्थ्यानि कार्याणि सम्पादयन् स्वकर्तव्यमपि न विस्मरति । अहं वैभवशालि जीवनं नेच्छामि, यतः मम जीवनं मानवानां कल्याणहेतुरस्ति ।"

फ्लोरेन्स नाइटिङ्गेल प्रथम नर्स हुन् । त्यतिखेर नर्सको पेसालाई त्यस्तो प्रतिष्ठित वा राम्रो मानिँदैनथ्यो । उनका बुबाआमाले उनलाई यस पेसामा देख्न चाहँदैनथे तर उनी मानिसको हित चाहन्थिन् । क्रिमियाको युद्धमा क्याम्पहरूमा गएर यिनले रोगीको उपचार गरिन् । रोगीको दुःख देखेर यिनी दुःखी भइन् । तिनीहरूको खुसी देखेर यिनी सुखी भइन् । अरूको उपकारका लागि नै जीवन सुम्पेर विश्वबन्धुत्वको अनुपम उदाहरण यिनले प्रस्तुत गरिन् । जतिखेर यिनी रोगीलाई हेर्न चाहन्थिन् त्यतिखेर यिनी बत्ती लिएर तिनीहरूको कोठामा जान्थिन् । त्यसैले यिनलाई दीपयुक्त नारी भन्न थाले । त्यसपछि यिनी त्यही उपनामले परिचित भइन् । मानवसेवामा लागेकी यिनले सबै मानिसलाई 'सेवा नै परम धर्म हो' भन्ने सिकाइन् । यिनका महत्त्वपूर्ण केही भनाइ तल छन् - "म कहिल्यै कारण देखाएर आफ्नो कामबाट विमुख भइनँ । यही नै मेरो सफलताको रहस्य हो । म विश्वास गर्छु कि महान् नायक त्यो हुन्छ, जो घरायसी काम गर्दै आफ्नो कर्तव्यलाई बिर्सँदैन । म सम्पन्न जीवन चाहन्नँ किनकि मेरो जीवन मानिसको कल्याणका लागि हो ।"

२. **अधोलिखितानां सीतायाः कथनानि पठित्वा तत्र प्रयुक्तानि लोट्लकारस्य क्रियापदानि चिनुत**

भवन्तौ श्रूयताम् । प्रतिवेशी तु बन्धुः भवति । यः सुखे दुःखे च साहाय्यं करोति स एव बन्धुरिति कथ्यते । समाजः विश्वबन्धुत्वं कामयति । भवन्तौ च परस्परं बन्धुत्वं कामयेताम् । बन्धुत्वभावनया विश्वशान्तिः सम्भवति ।

आम्, भवता सुष्ठु उक्तम् । अधुनापि एकस्य देशस्य कर्मकरा विदेशेषु गत्वा जीविकायै कार्यं कुर्वन्तः सन्ति । एतद् ज्ञात्वा भवन्तौ कथं कलहं कुरुतः ? कलहं मा कुर्वाताम् । कलहो विनाशाय भवति न तु विकासाय । वयम् अवलोकयामहै, सहयोगेन, सद्भावेन च वयं सुखपूर्वकं जीवनं यापयन्तः स्मः ।

भवद्भ्यां परस्परं विमर्शं कृत्वा व्यवह्रियेताम् । अधुना विलम्बः जायमानः अस्ति । गृहेऽपि कार्यमस्ति । अहं गच्छानि किम् ?

३. **पाठाधारेण परस्परं मेलयत**

| | |
|---|---|
| उदारचरितानां तु | अशान्तिं जनयति । |
| भयम् | स एव बन्धुरिति कथ्यते । |
| यः सुखे दुःखे च साहाय्यं करोति | वसुधैव कुटुम्बकम् । |
| मम संस्कृतौ ईश्वरस्य | विश्वस्य हितं भवति |
| अहं संसारस्य सर्वप्राचीनायाः | आराधनायां कट्टरता नास्ति । |
| बन्धुत्वस्य भावनया एव | परम्परायाः अनुयायी अस्मि । |

४. **पाठे प्रयुक्तम् अधो लिखितं श्लोकं सलयं पठित्वा प्रश्नान् उत्तरयत**

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥

(अ) **एकवाक्येन उत्तरयत**

(क) लघुचेतसः किं कुर्वन्ति ?

(ख) उदारचरिताः किं चिन्तयन्ति ?

(आ) **निर्देशानुसारेण उत्तरयत**

(क) 'गणना' अत्र किं वचनं प्रयुक्तम् ?

(ख) नीतिपद्ये 'पृथ्वी' इत्यर्थे किं पदमागतम् ?

(ग) 'लघुचेतसाम्' इत्यस्य विभक्तिः का ?

(घ) 'वेति' अस्य सन्धिविच्छेदं कृत्वा लिखत ।

५. **अधोलिखितं गद्यांशं पठित्वा प्रश्नान् उत्तरयत**

नेपाले राष्ट्रियमानवाधिकारायोगस्य संस्थापना २०६८ तमे वैक्रमाब्दे अभवत् । मानवाधिकारस्य सम्मानम्, संरक्षणम्, संवर्धनं च अस्य स्थापनायाः प्रमुखानि कार्याणि सन्ति । आयोगः नेपालस्य संविधानेन संवैधानिकम् अङ्गमिति स्वीकृतः अस्ति । अधिकारस्य प्रत्याभूत्यै आयोगः कार्यं करोति । यत्र अधिकारस्य हननं भवति तत्र अधिकारस्य सुनिश्चिततां एष सम्पादयति । कोऽपि मानवः कस्मादपि पीडितो न भवेदिति आयोगस्य चिन्तनं भवति । समाजे कुप्रथावशाद् लोभवशात् च आपराधिकं कार्यं भवितुं शक्नोति । कस्यचन मनोरञ्जनेन अन्यस्य अधिकारः खण्डितो भवितुं शक्नोति । कारणं किमपि भवितुं शक्नोति, राजनीतिकम्, सांस्कृतिकम्, सामाजिकम् वा । मानवः जन्मना समानः एव भवति । अतः तस्य जातिविषये, वर्णविषये, लिङ्गविषये च भेदभावना न भवेदिति आयोगः वाञ्छति । नगरेषु ग्रामेषु वा मानवाधिकारस्य हननं भवति चेद् आयोगः अधिकारस्य स्थापनायां प्रयतमानः भवति । यदि कुत्रचिद् अधिकारस्य हननं दृश्यते चेद् वयमपि आयोगं सूचयितुं शक्नुमः । तेन पीडितः साधिकारं जीवनं यापयितुं समर्थः भवति ।

(क) नेपाले राष्ट्रियमानवाधिकारायोगस्य संस्थापना कदा अभवत् ?

(ख) आयोगस्य प्रमुखानि कार्याणि कानि सन्ति ?

(ग) आयोगस्य चिन्तनं किं भवति ?

(घ) आयोगः किं वाञ्छति ?

(ङ) वयं किं कर्तुं शक्नुमः ?

नेपालमा राष्ट्रिय मानव अधिकार आयोगको स्थापना वि.सं. २०६८ मा भयो। मानव अधिकारको सम्मान, संरक्षण र संवर्धन यसको स्थापनाका प्रमुख काम हुन्। आयोगलाई नेपालको संविधानले संवैधानिक अङ्ग स्वीकार गरेको छ। अधिकारको प्रत्याभूतिका लागि आयोगले काम गर्दछ। जहाँ अधिकारको हनन हुन्छ, त्यहाँ अधिकारको सुनिश्चितता यसले गर्दछ। कुनै पनि मानिस कसैबाट पनि पीडित नहोस् भन्ने आयोगको चिन्तन हुन्छ। समाजमा कुप्रथाका कारण र लोभका कारण पनि आपराधिक कार्य हुन सक्छ। कसैको रमाइलोले अर्काको अधिकार खण्डित हुन सक्छ। कारण कुनै पनि हुन सक्छ, राजनीतिक, सांस्कृतिक वा सामाजिक। मानिस जन्मबाट समान नै हुन्छन्। त्यसैले जातिका विषयमा, वर्णका विषयमा र लिङ्गका विषयमा विभेदको भावना नहोस् भन्ने आयोग चाहन्छ। सहरमा वा गाउँमा मानव अधिकारको हनन हुन्छ भने आयोग अधिकारको स्थापनाका लागि प्रयासरत हुन्छ। यदि कतै अधिकारको हनन भएको देखिन्छ भने हामीले पनि आयोगलाई सूचना दिन सक्छौँ। त्यसबाट पीडित अधिकारपूर्वक जीवन गुजार्न सक्षम हुन्छ।

६. **अधो लिखितानि पदानि शुद्धमुच्चारयत**

सप्तविंशतिदिनाङ्कपर्यन्तम्, निरङ्कुशशासनव्यवस्थया, जागरणसूत्रम्, शस्त्रास्त्राणाम्, शान्तिसंस्थापनस्य, आतङ्कवादनिराकरणस्य, चेतनामूलकान्, पुनर्मेलिष्यावः।

## लेखनम्

१. **पुस्तकं शब्दकोशं शिक्षकसहयोगं वा अवलम्ब्य शब्दानामर्थं नेपालीभाषायां लिखत**

आरभ्य, संसर्गेण, पदावली, मत्क्षेत्रीयाः, स्वकृत्यानि, रक्तपातः, बीजम्, परामर्शः, प्रतिवेशी, सद्भावः, सहमतिः, परित्यज्य, विलम्बः।

२. **विवेकानन्दस्य महत्त्वपूर्णानि कथनानि शिक्षकात् श्रुत्वा लिखत।**

३. **पदानि प्रयुज्य वाक्यानि रचयत**

ग्रहीतुम्, अनुयायी, प्रबन्धम्, नास्ति, प्रवचनम्, शाकस्य, शृणवानि, वर्धते, जीवनम्, गठनम्, भ्रमणाय, अशान्तिः, धन्यवादः।

**४. कोष्ठकाद् उचितं पदं चित्वा रिक्तस्थानं पूरयत**

(परिवारः, विवादसमाधानाय, विकासाय, विश्वबन्धुत्वम्, सद्भावः)

(क) अहं ..................... साहाय्यं कर्तुं शक्नोमि किम् ?

(ख) समाजः .......................... कामयति ।

(ग) ................. बन्धुत्वेन सम्पद्यते ।

(घ) कलहो विनाशाय भवति न तु ........................ ।

(ङ) संसार एव .................. वर्तते ।

**५. पाठे प्रयुक्तं पद्यमनुलिखत ।**

**६. अधस्तनानां पदानाम् अशुद्धीः संशोध्य लिखत**

सूयते, समीचिनम्, बिजानि, द्वितियविश्वयुद्धेन, भयम्, नितिनिर्माणम्, सुनिस्चितः, सुस्ठु, बिलम्ब

**७. एकपदेन प्रश्नान् उत्तरयत**

(क) किं मा कुरुताम् ?

(ख) भवन्तौ परस्परं किं कामयेताम् ?

(ग) भयः किं जनयति ?

(घ) उदारचरितानां कृते मानवाः कीदृशाः भवन्ति ?

(ङ) काः कार्यं कर्तुं न शक्नुवन्ति ?

(च) अशान्तिः कस्य बाधकः भवति ?

(छ) केन सम्यग् उक्तम् ?

(ज) बन्धुत्वस्य भावनया एव विश्वस्य किं भवति ?

**८. प्रश्नान् सङ्क्षेपेण उत्तरयत**

(क) नवीनः किं कुर्वन् अस्ति ?

(ख) किमर्थं राष्ट्रसङ्घस्य स्थापना अभवत् ?

(ग) कथं सर्वेषां कल्याणं भवति ?

(घ) सद्भावस्य आवश्यकता किमर्थं भवति ?

(ङ) कः लघुचेताः कथ्यते ?

(च) आयोगाः किं कुर्वन्ति ?

(छ) कथं विश्वस्मिन् शान्तेः स्थापना भवति ?

(ज) एकस्य देशस्य नागरिकः किमर्थमन्यं देशं गच्छति ?

(झ) कथं समस्यायाः समाधानं कर्तव्यम् ?

(ञ) भूमिमापनेन किं निश्चेतव्यम् ?

**९. पाठाधारेण विश्वबन्धुत्वस्य महत्त्वविषये दश वाक्यानि लिखत ।**

## व्याकरणानुशीलनम्

**१. प्रदत्तानि धातुरूपाणि पठित्वा अभ्यासपुस्तिकायामनुलिखत**

एध्-धातोः आज्ञाप्रार्थनादिषु लोट्-लकारे रूपाणि -

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमः पुरुषः | एधताम् | एधेताम् | एधन्ताम् |
| मध्यमः पुरुषः | एधस्व | एधेथाम् | एधध्वम् |
| उत्तमः पुरुषः | एधै | एधावहै | एधामहै |

**२. धातुरूपं लिखित्वा रिक्तस्थानं पूरयत**

लभ्- लभताम् ..................... .......................

वृध् (वर्ध्)- ................. वर्धेथाम् .......................

सेव्- ................. ................. सेवामहै

**३. याच्-धातोः एध्-धातुवत् लोट्-लकारे रूपाणि लिखत ।**

**४. शिक्षकस्य सहयोगेन कृ-धातोः एध्-धातुवत् लोट्-लकारे रूपाणि लिखत ।**

**५. शिक्षकाद् यथावश्यकं साहाय्यम् अवाप्य परस्परं मेलयत**

| | |
|---|---|
| सः/सा/तत्/छात्रः | एधस्व |
| तौ/ते/ते/छात्रौ | वन्दन्ताम् |
| ते/ताः/तानि/छात्राः | सेवेताम् |
| त्वम् | याचै |
| युवाम् | यतध्वम् |
| यूयम् | मन्यामहै |
| अहम् | भाषताम् |
| आवाम् | शङ्केथाम् |
| वयम् | शिक्षावहै |

**६. अधस्तनानां सन्धियुक्तानां पदानां सन्धिच्छेदं पठित्वा शिक्षकं श्रावयत**

(क) ततस्तेषाम् = ततः + तेषाम्
(ख) विद्यालयस्य = विद्या + आलयस्य
(ग) नमस्कारः = नमः + कारः
(घ) भूमिरस्ति = भूमिः + अस्ति
(ङ) शक्नुमो वयम् = शक्नुमः + वयम्
(च) युद्धानन्तरम् = युद्ध + अनन्तरम्
(छ) कोऽपि = कः + अपि
(ज) सर्वेऽपि = सर्वे + अपि
(झ) संसार एव = संसारः + एव
(ञ) एको ग्रामः = एकः + ग्रामः
(ट) भवत्येव = भवति + एव
(ठ) विकास एव = विकासः + एव

| |
|---|
| नीचैः, विना, रात्रौ, किञ्चित्, अकस्मात्, निकषा, मृषा, व्यर्थम्, भूयः, किल, अनन्तरम्, वा, सदा, अपि |

७. **अधस्तनानाम् अव्ययपदानां पर्यायपदानि मञ्जूषातः उद्धृत्य लिखत**

अधः, ऋते, नक्तम्, ईषत्, सहसा, समया, मिथ्या, वृथा, पुनः, खलु, अथ, अथवा, शश्वत्, च

## रचनात्मकः अभ्यासः

१. **अधः प्रदत्तानां शब्दानां साहाय्येन पञ्चभिः वाक्यैः चित्रवर्णनं कुरुत**

(प्राङ्गणे, शिष्याः, मार्गे, ऋषिः, चलन्तः, दयालुः, खाद्यं, ददन्, भक्ताः, भगवतः, स्तुतिम्, गायन्तः)



२. **मञ्जूषास्थितैः संवादांशैः अधस्तनं लघुसंवादं पूरयित्वा शीर्षकं दत्त**

| |
|---|
| ताडनाद् मानवाधिकारस्य हननमेव जायते । |
| ताडयानि किम् ? |
| परन्तु ताडनं न करोतु । |
| अधुना एतं पात्रमार्जनाय प्रेषयामि, अनन्तरं परामृशामि । |
| मम क्षतिर्जाता । |

(राममाया भोजनालये चायं पिबन्ती आसीत् । तदा एव भोजनालयस्य स्वामी कर्मकरे क्रुध्यति ।)

**स्वामी** द्रष्टुं न शक्नोषि ? नयने न स्तः ? खाद्यं सर्वं गतम् ? ..............................

**राममाया** किम् अभवत् ? कदाचित् त्रुटिर्भवितुं शक्नोति । ताडनेन को लाभः ? यद्यपि .... ............................ प्रहरिणः भवन्तं कारागारं नयन्ति ।

**स्वामी** किमर्थं नयन्ति ते माम् ? ......................... कः पूरयति मम क्षतिम् ?

**राममाया** जानाम्यहम् । अस्य पारिश्रमिकाद् भवान् क्षतिं पूरयतु .............................. एष भीतः अस्ति । अस्मिन् समये ध्यानेन कार्यं कर्तुं परामर्शः दातव्यः ।

**स्वामी** भवत्या साधु उक्तम् । ...................................................................

(स्वामी कर्मकरं प्रेषयति । राममाया स्वस्थानं गत्वा चायं पिबति ।

## श्रवणपाठः

वातावरणस्य प्रदूषणं सर्वथा हानिं जनयति । अस्याः हानेः निराकरणाय प्रथमं अस्मान् परितः स्वच्छता आवश्यकी भवति । तस्य कृते अस्माभिः रिक्तस्थानेषु वृक्षरोपणं कर्तव्यम् । उद्योगेभ्यः निःसृतानाम् अवकराणां रसायनादीनां च समुचितं व्यवस्थापनं कर्तव्यम् । यत्र कुत्रापि अवकरक्षेपणं वर्जनीयम् । रसायनादीनि वातावरणं प्रदूषयन्ति । बस-कार-वायुयानादिभ्यः निःसृतः धूमः वायुमण्डलं दूषयति । तस्मात् कारणाद् यानानां प्रयोगे च विवेकः आवश्यकः भवति । विद्युत्प्रयोगेण यानादिकं चालयितव्यम् । वातावरणस्य संरक्षणेन एव अस्माकं हितं भवति । ग्रामे ग्रामे च चेतनामूलकान् कार्यक्रमान् आयोज्य वातावरणस्य संरक्षणाय अस्माभिः प्रयासः विधेयः । सर्वकारः अपि अस्य स्वच्छतायै यतमानः एव दृश्यते । प्रदूषकेभ्यः दण्डव्यवस्था कठोरा भवितुमर्हति । यतः स्वच्छं वातावरणमेव स्वस्थं जीवनमस्तीति सर्वैः ज्ञातव्यम् ।

# पञ्चमः पाठः

## पाठप्रवेशः

# नीतिशिक्षा

गङ्गातटे पाटलिपुत्रनामकं नगरमस्ति । पुरा तत्र सुदर्शननामकः सद्गुणवान् राजा आसीत् । सर्वसम्पन्नोऽपि सोऽत्यन्तं चिन्तित आसीत्, यतो हि तस्य पुत्राः उन्मत्ताः, नीतिज्ञानहीनाः, मूर्खाश्च आसन् । राजा पुत्राणां विषये अनेकधा विचार्य राजप्रासादे एकां पण्डितसभामकारयत् । तत्र स्वराज्यादन्यराज्येभ्यश्च अनेके नीतिशास्त्रकुशला विद्वांस आगच्छन् । राजा तेषामग्रे स्वपुत्राणामवस्थां विज्ञाप्याकथयत्, "उन्मत्तान् मूर्खान् च मम पुत्रान् नीतिशास्त्रज्ञान् कारयितुं कोऽपि पण्डितः समर्थो विद्यते किम् ?" राज्ञो वचनं श्रुत्वा अन्ये सर्वेऽपि विद्वांसो मौनमाकलयन् परं विष्णुशर्मनामकः विद्वान् तान् अध्यापयितुं तत्परः अभवत् । सः अकथयत्, "राजन् ! भवतां कुले उत्पन्नाः एते निर्गुणाः भवितुं नार्हन्ति । अतः अहमेतान् षण्मासाभ्यन्तरे नीतिशास्त्रकुशलान् कर्तुं शक्नोमि ।" विष्णुशर्मणो वचनेन अत्यन्तं हर्षितो राजा बहुमानपुरःसरं स्वपुत्रान् विष्णुशर्मणे समार्पयत् । ततो विष्णुशर्मा पशुपक्षिणां जनानां च विविधकथामाध्यमेन तान् नीतिविषयानध्यापयत् । नीतेः अध्ययनेन तेषां राजपुत्राणामुन्मादः अपगतः । ते राजनीतौ व्यवहारनीतौ च कुशला अभवन् । ते वैदुष्यपूर्णाः सभ्या अजायन्त । धनेन, यौवनेन, प्रभुत्वेन च युतोऽपि जनो नीतिरहितो वर्तते चेत् स सामाजिकः सभ्यश्च भवितुं नार्हति । नीतिरेव सभ्यतां सामाजिकतां च शिक्षयति । अतो जीवने नीतिशिक्षायाः परं महत्त्वं वर्तते । आगच्छत छात्राः ! अद्य वयं नीतिशिक्षाप्रदायकान् काँश्चन श्लोकान् पठाम ।

गङ्गा नदीको किनारमा पाटलिपुत्र (पटना) नामको सहर छ । पहिले त्यहाँ सुदर्शन नामका असल गुणले युक्त एक राजा थिए । सबै कुराले सम्पन्न हुँदाहुँदै पनि ती राजा अत्यन्त चिन्तित थिए किनकि तिनका पुत्रहरू उन्मत्त, नीति ज्ञान नभएका र मूर्ख थिए । राजाले छोराका विषयमा अनेक प्रकारले विचार गरी एउटा पण्डितसभा गराए । सो सभामा आफ्नो राज्य र अन्य राज्यबाट नीतिशास्त्रका ज्ञाता अनेक विद्वान्हरू आए । राजाले तिनीहरूका अगाडि आफ्ना छोराका बारेमा जानकारी दिई भने, "उन्मत्त र मूर्ख मेरा छोरालाई नीतिशास्त्रका ज्ञाता बनाउन कुनै विद्वान् समर्थ हुनुहुन्छ ?" राजाको कुरा

सुनेर अरू सबै विद्वान्हरू चुप लागे तर विष्णु शर्मा नाम गरेका विद्वान् ती राजपुत्रलाई पढाउन तयार भए । उनले भने, “हे राजन् हजुरको कुलमा उत्पन्न भएका यी राजपुत्रहरू गुणहीन हुन सक्दैनन् । त्यसैले म यिनीहरूलाई ६ महिनाभित्र नीतिशास्त्रका ज्ञाता बनाउन सक्छु ।” विष्णुशर्माको कुराले अत्यन्त खुसी भएका राजाले धेरै सम्मानका साथ आफ्ना छोराहरू विष्णु शर्मालाई सपर्पण गरे । त्यसपछि विष्णु शर्माले पशुपक्षी र मानिसको विभिन्न कथाका माध्यमले तिनीहरूलाई नीतिका विषय पढाए । नीतिको अध्ययन गरिसकेपछि ती राजपुत्रको उन्माद हट्यो । उनीहरू राजनीतिमा र व्यवहारनीतिमा पनि कुशल भए । उनीहरू विद्वत्ताले युक्त सभ्य बने । धन, यौवन र प्रभुत्वले युक्त हुँदाहुँदै पनि मान्छे नीतिरहित छ भने त्यो सामाजिक र सभ्य बन्न सक्दैन । नीतिले नै मानिसलाई सामाजिकता र सभ्यता सिकाउँछ । त्यसैले जीवनमा नीतिशीक्षाको ठुलो महत्त्व छ । आउनुहोस् आज हामी नीतिशिक्षा दिने केही श्लोकहरू पढौँ ।

**मूलपाठः**

## वाग्भूषणं भूषणम्

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः,
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः,
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ?
सौजन्यं यदि किं बलेन महिमा यद्यस्ति किं मण्डनैः,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ?

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो,
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।

व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषम्,
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः,
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनम्,
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता,
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले,
येष्वेते निवसन्ति निर्मलगुणास्तेभ्यो महद्भ्यो नमः ॥

**प्रथमं पद्यम्**

**अन्वयः** -

केयूराणि पुरुषं न भूषयन्ति, चन्द्रोज्ज्वला हाराश्च न, स्नानं च न, विलेपनं च न, कुसुमं च न, अलङ्कृताः मूर्धजाश्च न । या संस्कृता धार्यते (सा) एका वाणी पुरुषं समलङ्करोति । भूषणानि खलु क्षीयन्ते । वाग्भूषणम् सततम् भूषणम् (अस्ति) ।

**सरलार्थः** -

अङ्गदानि, समुज्ज्वला कण्ठहाराः, स्नानम्, विलेपनम्, पुष्पसज्जा, शोभनाः कुन्तलाश्च जनं तथा न भूषयन्ति, यथा कोशव्याकरणादिभिः परिशोधिता संस्कृता वाणी भूषयति । अन्यानि सकलानि आभूषणानि कालक्रमेण विनश्यन्ति परन्तु वाग्भूषणं कदापि न विनश्यति । अतः संस्कृतं वाग्भूषणं सदैव धारणीयम् ।

केयूर, चम्किला हार, स्नान, चन्दन आदिको लेपन, फूल र कुण्डलले मानिसलाई त्यति शोभा दिँदैनन्, जति शोभा कोश, व्याकरण आदिले परिष्कृत भएको संस्कृत वाणीले दिन्छ । अन्य सम्पूर्ण गरगहनाहरू समयको परिवर्तनसँगै नष्ट हुन्छन् तर वाणीरूपी गहना कहिल्यै नष्ट हुँदैन । त्यसैले संस्कृतवाणीरूपी गहना सधैँ लगाउनुपर्छ ।

## द्वितीयं पद्यम्

**अन्वयः** -

लोभः (अस्ति) चेद् अगुणेन किम् ? यदि पिशुनता अस्ति पातकैः किम् ? सत्यम् (अस्ति) चेत् तपसा च किम् ? मनः यदि शुचि अस्ति तीर्थेन किम् ? यदि सौजन्यम् (अस्ति) बलेन किम् ? यदि महिमा अस्ति मण्डनैः किम् ? यदि सद्विद्या (अस्ति, तर्हि) धनैः किम् ? यदि अपयशः अस्ति (तर्हि) मृत्युना किम् ?

**सरलार्थः** –

यदि कस्मिँश्चिदपि जने लोभो वर्तते चेत् तत्र अन्यस्य दुर्गुणस्य आवश्यकता एव न भवति । लोभ एव निन्दनीयो महान् दुर्गुणः । तथैव यदि कश्चन जनः पिशुनोऽस्ति चेद् नरकाय अन्यस्य पापकर्मणः आवश्यकत्वमेव न भवति । जनः सत्यं वदति, सत्यमेव व्यवहरति चेद् अन्यस्य तपसः तस्य जीवने आवश्यकता न भवति । जनस्य मनो निर्मलमस्ति चेत् तीर्थाटनस्य आवश्यकत्वं न सिद्ध्यति । जने सुजनता अस्ति चेत् शारीरिकस्य बलस्य आवश्यकता न भवति । यदि जनः सद्गुणनां महिम्ना अन्वितोऽस्ति चेद् आभूषणैरलङ्करणस्य आवश्यकत्वं न जायते । सद्विद्यया युक्तस्य जनस्य कृते अन्यस्य धनस्य आवश्यकत्वं न भवति । अपयशो मृत्योरपि पीडादायि भवति, तेन अपयशसा युतस्य जनस्य कृते मृत्योः आवश्यकता न भवति ।

यदि कसैमा लोभ छ भने अर्को दुर्गुणको आवश्यकता नै पर्दैन । लोभ नै निन्दायोग्य ठुलो दुर्गुण हो । त्यस्तै यदि कुनै मानिस छुल्याहा छ भने नरकका लागि अरू पापकर्मको आवश्यकता हुँदैन । मानिस सत्य बोल्छ र सत्य व्यवहार गर्छ भने अर्को तपस्याको आवश्यकता हुँदैन । मानिसको मन स्वच्छ छ भने तीर्थयात्राको आवश्यकता हुँदैन । मानिसमा साधुता छ भने शारीरिक बलको आवश्यकता हुँदैन । मानिस सद्गुणको महिमाले प्रतिष्ठित छ भने त्यसलाई गहनाले सजिनुपर्ने आवश्यकता हुँदैन । सद्विद्याले युक्त भएको मानिसलाई अन्य धनको आवश्यकता हुँदैन । अपयश मृत्युभन्दा पनि पीडादायी हुन्छ । त्यसैले अपयशले युक्त भएको मानिसका लागि मृत्युको पनि आवश्यकता हुँदैन ।

## तृतीयं पद्यम्

**अन्वयः** -

हुतभुक् जलेन, सूर्यातपः छत्रेण, समदः नागेन्द्रः निशिताङ्कुशेन वारयितुं शक्यः । गोगर्दभौ दण्डेन ( वारयितुम् शक्यौ), भेषजसङ्ग्रहैः व्याधिः (वारयितुम् शक्यः), विविधैः मन्त्रप्रयोगैः विषं च (वारयितुं शक्यम्) सर्वस्य शास्त्रविहितम् औषधम् अस्ति, मूर्खस्य औषधम् नास्ति ।

**सरलार्थः** –

संसारस्य सकलानां समस्यानां समाधानं शास्त्रेण निर्दिष्टं वर्तते । यथा अग्निः पानीयेन शाम्यते । सूर्यप्रकाशः छत्रेण वार्यते । गजः तीक्ष्णेन अङ्कुशेन नियम्यते । गोगर्दभौ च दण्डेन वशीक्रियेते । व्याधिरौषधप्रयोगेण नियन्त्र्यते । विषञ्च मन्त्रप्रयोगेण शाम्यते । परन्तु मूर्खस्य औषधं कुत्रापि न प्राप्यते । मूर्खताया अपाकरणम् असम्भवमस्ति ।

संसारका सम्पूर्ण समस्याको समाधान शास्त्रले बताएकै छन् । जसरी आगो पानीले शान्त हुन्छ । छाताद्वारा घामको निवारण गरिन्छ । हात्तीलाई तिखो अङ्कुशले र गाई, गोरु, गधालाई लौरोद्वारा नियन्त्रण गर्न सकिन्छ । औषधीको प्रयोगबाट रोग र मन्त्रप्रयोगद्वारा विषको शमन हुन्छ तर मूर्खको औषधी कतै पनि पाइँदैन । मूर्खताको निराकरण असम्भव छ ।

## चतुर्थं पद्यम्

**अन्वयः** –

कः लाभः ? गुणिसङ्गमः । किम् असुखम् ? प्राज्ञेतरैः सङ्गतिः । का हानिः ? समयच्युतिः । का निपुणता ? धर्मतत्त्वे रतिः । कः शूरः ? विजितेन्द्रियः । का प्रियतमा ? अनुव्रता । किं धनम् ? विद्या । किं सुखम् ? अप्रवासगमनम् । किं राज्यम् ? आज्ञाफलम् ।

**सरलार्थः** –

लाभः कोऽस्ति ? गुणवद्भिर्जनैः सह सङ्गम एव लाभो वर्तते । दुःखं किमस्ति ? प्रज्ञाहीनैर्मूर्खैः

सह सङ्गतिरेव दुःखमस्ति । हानिः काऽस्ति ? समयस्य वृथा यापनमेव हानिरस्ति । निपुणता काऽस्ति ? धर्मस्य सारं गृहीत्वा प्रवर्तने प्रीतिरेव जनस्य निपुणता वर्तते । वीरः कोऽस्ति ? दुर्जेयानामिन्द्रियाणां विजेता हि वीरो वर्तते । प्रियतमा काऽस्ति ? पत्युरिच्छानुरूपं चलन्ती स्त्री एव तस्य कृते प्रियतमा अस्ति । सुखं किमस्ति ? जीविकायै स्वदेशं परित्यज्य प्रवासगमनं न स्यात्, एतदेव सुखमस्ति । राज्यं किमस्ति ? स्वाज्ञापालकत्वेन अन्येषामनुकूलीकरणमेव राज्यं वर्तते ।

लाभ के हो ? असल मानिससँग सङ्गत गर्नु नै लाभ हो । दुःख के हो ? बुद्धि नभएका मूर्खसँग सङ्गत गर्नु नै दुःख हो । हानि के हो ? समय त्यत्तिकै खेर फाल्नु हानि हो । निपुणता के हो ? धर्मको सारलाई ग्रहण गरी त्यसैमा रमाउनु नै मानिसको निपुणता हो । वीर को हो ? दुर्जेय इन्द्रियलाई जित्नेवाला व्यक्ति नै वीर हो । प्रिया को हुन् ? पतिको इच्छानुसार हिँड्ने पत्नी नै पतिका लागि प्रिया हुन् । सुख के हो ? जीविकाका लागि स्वदेश छाडी परदेश जान नपर्नु नै सुख हो । आफ्नो आज्ञाको पालन गर्ने बनाउन सक्नु नै राज्य हो ।

## पञ्चमं पद्यम्

**अन्वयः -**

सज्जनसङ्गमे वाञ्छा, परगुणे प्रीतिः, गुरौ नम्रता, विद्यायां व्यसनम्, स्वयोषिति रतिः, लोकापवादाद् भयम्, शूलिनि भक्तिः, आत्मदमने शक्तिः, खले संसर्गमुक्तिः एते निर्मलगुणाः येषु निवसन्ति तेभ्यः महद्भ्यः नमः ।

**सरलार्थः -**

ये जनाः साधुसङ्गमं वाञ्छन्ति, अन्येषां गुणेषु प्रीणन्ति, मान्यजनेषु विनयशीला भवन्ति, वेदादिविद्यानामभ्यासं कुर्वते, स्वपत्न्यां प्रेमभावयुक्ता भवन्ति, लोकापवादाद् बिभ्यति, शङ्करे भक्तिं भावयन्ति, स्वकीयानि इन्द्रियाणि वशीकुर्वन्ति, दुर्जनसंसर्गाद् दूरे तिष्ठन्ति, ते वन्दनीयाः सन्ति । सद्गुणशालिनः ते खलु वन्दनीयाः, अतोऽनुसरणीयाश्च ।

जो मानिस सज्जनसँगको सङ्गत चाहन्छन्, अरूका गुणलाई मन पराउँछन्, मान्यजनप्रति विनयशील रहन्छन्, वेदादि विद्याको अभ्यास गर्छन्, आफ्नी पत्नीका प्रेमी हुन्छन्, लोकको लाञ्छनाबाट डराउँछन्, भगवान् शिवको भक्ति गर्छन्, आफ्ना इन्द्रियलाई वशमा राख्छन्, दुर्जनको सङ्गतबाट टाढै रहन्छन्, उनीहरू वन्दनीय हुन्छन् । सद्गुणशाली उनीहरूलाई नमस्कार छ ।

**शब्दार्थाः**

| | | | |
|---|---|---|---|
| हारः | कण्ठभूषणम् | हार | Fresh |
| खलु | नूनम् | निश्चय नै | Definitely |
| भूषणम् | आभरणम् | गहना | Ornament |
| सततम् | निरन्तरम् | निरन्तर | Continuous |
| वाग्भूषणम् | वचनाभरणम् | वाणीरूपी गहना | Verbal ornament |
| पिशुनता | कर्णेजपता | छुल्याइँ | Backbiting |
| पातकम् | कल्मषम् | पाप | Sin |
| शुचि | निर्मलम् | पवित्र | Holy |
| सौजन्यम् | साधुता | सज्जनपन | Gentility |
| महिमा | माहात्म्यम् | गुणगान | Glory |
| मण्डनम् | अलङ्करणम् | सजाउनु | Adornment |
| सद्विद्या | सज्ज्ञानम् | असल विद्या | Good knowledge |
| अपयशः | दुष्कीर्तिः | बदनाम | Infamy |
| मृत्युः | मरणम् | मर्नु | Death |
| हुतभुक् | अग्निः | आगो | Fire |
| छत्रम् | आतपत्रम् | छाता | Umbrella |
| सूर्यातपः | आदित्यातपः | घाम | Heat of the Sun |
| नागेन्द्रः | गजः | हात्ती | Elephant |
| दण्डः | यष्टिः | लौरो | Stick |
| गौः | धेनुः, वृषः | गाई गोरु | Cow, Ox |

| | | | |
|---|---|---|---|
| गर्दभः | रासभः | गधा | Donkey |
| व्याधिः | आमयः | रोग | Disease |
| भेषजम् | औषधम् | औषधी | Medicine |
| लाभः | प्राप्तिः | लाभ | Achievement |
| प्राज्ञेतरः | विज्ञेतरः | मूर्ख | Foolish |
| निपुणता | दक्षता | सिपालुपन | Dexterity |
| रतिः | प्रेम | प्रेम | Enjoyment |
| शूरः | पराक्रमी | वीर | Mighty |
| प्रवासः | परदेशवासः | परदेशमा बस्नु | Living abroad |
| वाञ्छा | इच्छा | चाहना | Desire |
| प्रीतिः | प्रेम | प्रेम | Love |
| स्वयोषित् | स्वपत्नी | आफ्नी पत्नी | Own wife |
| लोकापवादः | लोकनिन्दा | लोकले लगाउने अपवाद | Blasphemy |
| शूली | शिवः | त्रिशूलधारी महादेव | God Shiva |
| खलः | दुष्टः | बदमास | Evil/Bad person |

## अभ्यासः

### श्रवणं भाषणञ्च

१. **शिक्षकमुखाद् अधः प्रदत्तानि पदानि श्रुत्वा अनूच्चारयत**

हुतभुक्, छत्रेण, सूर्यातपः, नागेन्द्रः, निशिताङ्कुशेन, गोगर्दभौ, व्याधिः, भेषजम्, सङ्ग्रहः, मन्त्रप्रयोगः, औषधम्, शास्त्रविहितम्, गुणिसङ्गमः, प्राज्ञेतरैः, सङ्गतिः, समयच्युतिः, निपुणता, धर्मतत्त्वम्, विजितेन्द्रियः, प्रियतमा, अनुव्रता, प्रवासगमनम्, राज्यम्, आज्ञाफलम् ।

२. **उदाहरणम् अनुसृत्य अधस्तनपदानां पदच्छेदं विधाय श्रावयत**

उदाहरणम् : सज्जनसङ्गमः = सज्जन + सङ्गमः

परगुणः, स्वयोषित्, लोकापवादः, संसर्गमुक्तिः, निवसन्ति, निर्मलगुणाः ।

३. **पाठस्य द्वितीयतृतीये पद्ये यथालयमनुवाचयत ।**

४. **पाठाद् गृहीतानि अधस्तनानि पदानि प्रयुज्य एकैकं वाक्यं कक्षयां श्रावयत**

हाराः, खलु, भूषणम्, सततम्, वाग्भूषणम्, पिशुनता, पातकम्, शुचि, सौजन्यम्, महिमा ।

५. **पाठस्य द्वितीयं पद्यं तदर्थं च श्रुत्वा उत्तराणि कथयत**

(क) लोभः कीदृशो दुर्गुणो वर्तते ?

(ख) जने लोभो वर्तते चेत् कस्य आवश्यकता न भवति ?

(ग) कश्चन पिशुनोऽस्ति चेत् कस्य आवश्यकता न भवति ?

(घ) जने सुजनता अस्ति चेत् कस्य आवश्यकता न भवति ?

(ङ) जनः सत्यवक्ता अस्ति चेत् कस्य आवश्यकता न भवति ?

(च) कश्चन महिमान्वितोऽस्ति चेत् कस्य आवश्यकता न भवति ?

(छ) कश्चन सद्विद्याधनवानस्ति चेत् कस्य आवश्यकता न भवति ?

(ज) कस्यचन मनो निर्मलमस्ति चेत् कस्य आवश्यकता न भवति ?

(झ) कश्चन अपयशोभाग् अस्ति चेत् कस्य पृथक् प्रयोजनं नास्ति ?

६. **अधस्तनानि वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्' असत्यवाक्ये 'नहि ' इति वदत**

| | |
|---|---|
| (क) मूर्खैः सह सङ्गतिः लाभः अस्ति । | ..................... |
| (ख) यथाकालं कर्तव्यस्य अपालनं हानिः । | ..................... |
| (ग) धर्मस्य सारं बुद्ध्वा आचरणं निपुणता । | ..................... |
| (घ) दुर्जयानामिन्द्रियाणां विजेता हि वीरः । | ..................... |
| (ङ) जीविकायै प्रवासगमनं सुखमस्ति । | ..................... |

७. **केषामौषधं शास्त्रैः निर्दिष्टम्, कस्य च नेति पाठाधारेण सखिभिः सह विमृश्य वदत ।**

८. **के वन्दनीयाः भवन्ति किमर्थञ्चेति अधीतपाठानुसारं वर्णयत ।**

**९. श्रवणपाठं श्रुत्वा रिक्तस्थानं पूरयत**

(क) ....... सङ्गतिः सत्सङ्गतिः अस्ति ।

(ख) दुर्जनानां सङ्गतिः ........ भवति ।

(ग) बुद्धिमन्तो जनाः ....... नेच्छन्ति ।

(घ) ......... स्वभावेनैव सर्वेषां हितं चिन्तयन्ति ।

(ङ) ......... सर्वहितकारिणी भवति ।

## पठनम्

**१. अधस्तनस्य पद्यस्य कक्षायां सामूहिकवाचनं कुरुत**

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः,
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनम्,
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥

**२. पाठस्य प्रथमं पद्यं लयानुशीलनेन वाचयत ।**

**३. अधः प्रदत्तस्य पद्यस्य द्रुतवाचनं कुरुत**

को लाभो गुणिसङ्गमः किमसुखं प्राज्ञेतरैः सङ्गतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥

**४. पाठस्य तृतीयपद्यं पठित्वा निम्नप्रश्नान् उत्तरयत**

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो

नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥

क) अग्निः केन वारयितुं शक्यः ?

ख) निशिताङ्कुशेन कः वारयितुं शक्यः ?

ग) गोगर्दभौ कथं वारयितुं शक्यौ ?

घ) भेषजसङ्ग्रहैः कस्य वारणं भवति ?

ङ) विषस्य शमनं कथं भवति ?

५. **पद्याधारेण प्रश्नान् उत्तरयत**

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं,
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥

(हे मानव !) तृष्णा त्याग, क्षमा गर, घमण्ड त्याग, पाप कर्ममा नआउ, सत्य बोल, सज्जनको मार्गमा चल, विद्वान्को सेवा गर, आदरणीयको सम्मान गर, शत्रुलाई मित्रवत् राख, नम्रता देखाऊ, कीर्तिको रक्षा गर र दुःखीलाई दया गर, यो सज्जनहरूको आचरण हो ।

(क) का छेत्तव्या ?

(ख) कस्य परित्यागः कार्यः ?

(ग) कुत्र रतिः न करणीया ?

(घ) कस्यानुसरणं कर्तव्यम् ?

(ङ) कस्य सेवा विधेया ?

(च) कस्मिन् दया विधातव्या ?

६. **पञ्चमस्य प्रश्नस्य श्लोकं पुनः पठित्वा शिक्षकसाहाय्येन तदर्थं च बुद्ध्वा सज्जनलक्षणानां सूचीं निर्मात ।**

७. **अनुच्छेदं पठित्वा एकवाक्येन उत्तरप्रदायकान् काँश्चन पञ्च प्रश्नान् निर्माय तेषामुत्तराणि च लिखत**

पशुभिः सह मनुष्याणां सम्बन्धः सृष्टेरादिकालादेव वर्तते । तस्मात् कालादेव जनाः पशुपालनं कुर्वन्ति स्म । अर्थोपार्जनाय पशूनां पालनं पशुपालनं वर्तते । एतत् प्राचीनं महत्त्वपूर्णं च जीविकासाधनं मन्यते । अजगोघोटकमहिष्यादेः पालनमेव पशुपालनमस्ति । पुरा स्वप्रयोजनाय कृतं पशुपालनमधुना व्यवसायाय विधीयते । मूलतो मांसदुग्धादिपदार्थानां परिपूर्तये पशुपालनं कृतं दृश्यते । पशुपालनं कृषिकर्म च मिथः परिपूरकं मन्यते । पशुपालनेन विना कृषिर्न सम्भवति, कृष्या विना च पशुपालनं न सम्भवति । पशूनामावश्यकं खाद्यवस्तु कृषिजन्यं भवति चेत् कृषिकर्मणि आवश्यकं वानस्पतिकं खाद्यं पशुजन्यं भवति । अतोऽनयोः निकटतमः सम्बन्धो वर्तते ।

पशुसँग मानिसको सम्बन्ध सृष्टिको आदिकालदेखि नै रहेको छ । त्यही समयदेखि मानिस पशुपालन गर्दथे । धन कमाउनका लागि पशु पाल्ने काम नै पशुपालन हो । यसलाई पुरानो र महत्त्वपूर्ण पेसा मानिन्छ । बाखो, गाई, घोडा, भैँसी आदि पाल्नु नै पशुपालन हो । पहिले आफ्नो मात्र प्रयोजनका लागि गरिने पशुपालन अहिले व्यवसायका लागि गरिन्छ । मुख्यतः मासु र दुग्धजन्य पदार्थको परिपूर्तिका लागि पशुपालन गरिएको देखिन्छ । पशुपालन र कृषि एकअर्काका परिपूरक हुन् । पशुपालन विना कृषि र कृषि विना पशुपालन हुन सक्दैन । पशुका लागि आवश्यक खाद्यवस्तु कृषिबाट उपलब्ध हुन्छ भने कृषिका लागि आवश्यक मल पशुबाट प्राप्त हुन्छ । त्यसैले पशुपालन र कृषिको परस्पर निकट सम्बन्ध रहको छ ।

८. **अधोलिखितस्य गद्यांशस्य सस्वरवाचनं कुरुत**

शैलेशस्य गृहं वनस्य समीपे वर्तते । हरितस्य वनस्य शोभा प्राचुर्येण मनमोहिका भवति । तत्र नैकविधाः वनस्पतयः सन्ति । शैलूष-न्यग्रोध-रसालैः भरिते वने विविधाः लताश्च सुशोभन्ते । रुहा-सुभगा-नागवल्लिकाः धार्मिक-सांस्कृतिककार्येषु प्रयुज्यमाना वनस्पतयोऽपि वने लभ्यन्ते । वनस्पतीनां विविधाः प्रकाराः भवन्ति । तेषु लाभकारिगुणाः भवन्ति । असाध्यरोगाणां शमनाय, वातावरणस्य संरक्षणाय, प्राकृतिकसौन्दर्यस्य वर्धनाय च इमे महत्त्वपूर्णाः सन्ति । वनस्पतीनां विनाशः पर्यावरणस्यैव विनाशो मन्यते । पर्यावरणस्य विनाशात् स्वस्यैव विनाशः सम्भवति ।

शैलेशको घर जङ्गलनजिकै छ । हरियो वनको सुन्दरता अत्यन्त मनमोहक हुन्छ । त्यहाँ धेरै प्रकारका बिरुवाहरू छन् । बेल, वर र आँपलगायतका रुखले भरिएको जङ्गलमा विभिन्न लहराहरू सुशोभित भएका हुन्छन् । दुबो, हलेदो, तुलसी र पानलगायत धार्मिक तथा सांस्कृतिक कार्यमा प्रयोग गरिने वनस्पति पनि वनमा पाइन्छन् । बिरुवाहरू विभिन्न प्रकारका हुन्छन् । तिनीहरूसँग लाभदायक गुणहरू हुन्छन् । तिनीहरू निको नहुने रोगहरू कम गर्न, वातावरण संरक्षण गर्न र प्राकृतिक सौन्दर्य वृद्धि गर्न महत्त्वपूर्ण छन् । वनस्पतिको विनाशलाई वातावरणको विनाश मानिन्छ । वातावरणको विनाशले आफैँलाई विनाश गर्न सक्छ ।

९. **अधोलिखितम् अनुच्छेदं पठित्वा प्रश्नान् उत्तरयत**

हिमालयस्य दक्षिणभागे अवस्थितो नेपालः प्राकृतिकसांस्कृतिकदृष्ट्या जगत्येव प्रसिद्धो वर्तते । अत्र बहूमूल्यानि मूलौषधानि प्राप्यन्ते । हिमालयप्रदेशेषु पर्वतभूभागेषु च इमानि औषधानि विकीर्णानि सन्ति । स्वच्छपर्यावरणे समुद्भूतानि एतानि औषधानि विक्रीय वयं राष्ट्रं धनि कर्तुं शक्नुमः । एतादृशानि औषधानि राष्ट्रस्य सम्पत्तयो वर्तन्ते । राष्ट्रियसम्पत्तीनां संरक्षणेन सदुपयोगेन च राष्ट्रस्यैव सेवा भवति । हिमालयस्याङ्के स्वच्छं जलं सततं प्रवहति । जलमेतत् स्वच्छं पेयं पुष्टिकरं च वर्तते । एतस्य सदुपयोगेन अस्माकं न केवलं स्वास्थ्यम् अपितु अर्थतन्त्रं च सबलं भविष्यति । अत्र राष्ट्रेण ध्यानं प्रदातव्यम् । नेपालस्य हितं तदैव भवति ।

(क) औषधानि कुत्र सन्ति ?
(ख) राष्ट्रं कथं धनि भवति ?
(ग) राष्ट्रसेवा कदा भवति ?
(घ) स्वच्छं जलं कुत्र प्रवहति ?
(ङ) राष्ट्रेण कुत्र ध्यानं प्रदातव्यम् ?

हिमालयको दक्षिणी भागमा अवस्थित नेपाल प्राकृतिक र सांस्कृतिक सम्पदाका लागि विश्वप्रसिद्ध छ । यहाँ मूल्यवान् जरा तथा औषधी पाइन्छन् । यी औषधी हिमाली क्षेत्र र पहाडी भूभागमा छरिएका छन् । स्वच्छ वातावरणमा उत्पादन हुने यी औषधी बेचेर देशलाई धनी बनाउन सकिन्छ । यस्ता औषधी राष्ट्रका सम्पत्ति हुन् । राष्ट्रिय सम्पत्तिको संरक्षण र सदुपयोगले राष्ट्रको नै सेवा गर्छ । हिमालयको काखमा सफा पानी निरन्तर बगिरहन्छ । यो पानी पिउनका लागि सफा र पौष्टिक छ । यसको सही सदुपयोग गर्नाले हाम्रो स्वास्थ्य मात्र नभई अर्थतन्त्र पनि मजबुत हुने छ । यसतर्फ राष्ट्रले ध्यान दिनुपर्छ । त्यो बेला नेपालको हित खतरामा हुन्छ ।

## लेखनम्

१. **अधस्तनानां वाक्यानाम् अशुद्धीः निराकुरुत**

(क) सूर्यप्रकाशः छत्रेण वार्येते ।

(ख) विषं मन्त्रप्रयोगेण शाम्येते ।

(ग) अग्निः पानीयेन शाम्यन्ते ।

(घ) व्याधिः औषधप्रयोगेण शाम्यन्ते ।

(ङ) गोगर्दभौ च दण्डेन वशीक्रियते ।

(च) मूर्खस्य औषधं कुत्रापि न प्राप्यन्ते ।

(छ) मूर्खतास्य अपाकरणमसम्भवमस्ति ।

(ज) गजाः तीक्ष्णेन अङ्कुशेन वशीक्रियते ।

२. **अधस्तनानां पदानामर्थं लिखत**

हारः, खलु, भूषणम्, सततम्, वाग्भूषणम्, पिशुनता, पातकम्, शुचि, सौजन्यम् ।

३. **पाठस्थपद्येभ्यः कानिचन पञ्च समस्तपदानि अन्विष्य अत्र लिखत ।**

यथा– निर्मलगुणाः

४. **पाठस्य पञ्चमस्य श्लोकस्य श्रुतलेखनं कुरुत ।**

५. **पाठस्य चतुर्थं श्लोकमाधृत्य परस्परं मेलयत**

| | |
|---|---|
| लाभः | जितेन्द्रियः |
| निपुणता | विद्या |
| प्रियतमा | सत्सङ्गतिः |
| शूरः | धर्मतत्त्वे रतिः |
| धनम् | अनुव्रता |

६. **पाठस्य श्लोकान् भावार्थान् च पठित्वा प्रश्नान् उत्तरयत**

(क) कः वीरः ?

(ख) का हानिः ?

(ग) लाभः कोऽस्ति ?

(घ) के वन्दनीयाः सन्ति ?

(ङ) मनुष्यं का भूषयति ?

(च) किं सदैव धारणीयम् ?

(छ) का जनस्य निपुणता ?

(ज) का प्रियतमा भवति ?

(झ) किं कदापि न विनश्यति ?

(ञ) कालक्रमेण कानि विनश्यन्ति ?

७. **'वाग्भूषणं भूषणम्' इति विषये स्वभाषया एकमनुच्छेदं लिखत ।**

८. **पाठस्य पञ्चमं पद्यमाधृत्य महतां गुणानां सूचीनिर्माणं कुरुत ।**

९. **पद्यखण्डान् परस्परं मेलयत**

| | |
|---|---|
| को लाभो गुणिसङ्गमः किमसुखं | कानुव्रता किं धनम् |
| का हानिः समयच्युतिर्निपुणता | राज्यं किमाज्ञाफलम् |
| कः शूरो विजितेन्द्रियः प्रियतमा | प्राज्ञेतरैः सङ्गतिः |
| विद्या किं सुखमप्रवासगमनं | का धर्मतत्त्वे रतिः |
| वाञ्छा सज्जनसङ्गमे परगुणे | संसर्गमुक्तिः खले |
| विद्यायां व्यसनं स्वयोषिति रतिः | तेभ्यो महद्भ्यो नमः |
| भक्तिः शूलिनि शक्तिरात्मदमने | प्रीतिर्गुरौ नम्रता |
| येष्वेते निवसन्ति निर्मलगुणाः | लोकापवादाद् भयम् |

१०. **पाठाधारेण मञ्जूषायां प्रदत्तानि विपरीतार्थपदानि सारिणीतो लिखत**

| | | | | | |
|---|---|---|---|---|---|
| यथा– त्यागः | - | लोभः | | | |
| (क) पुण्यम् | - | ................ | (ख) अपवित्रम् | - | ................ |
| (ग) सुकीर्तिः | - | ................ | (घ) छाया | - | ................ |
| (ङ) विषम् | - | ................ | (च) विरतिः | - | ................ |
| (छ) घृणा | - | ................ | (ज) उद्दण्डता | - | ................ |
| (झ) उत्पद्यन्ते | - | ................ | (ञ) अनृतम् | - | ................ |
| (ट) दौर्जन्यम् | - | ................ | (ठ) जन्म | - | ................ |
| (ड) नैरुज्यम् | - | ................ | (ढ) हानिः | - | ................ |
| (ण) कातरः | - | ................ | | | |

**मञ्जूषा**

क्षीयन्ते, लोभः, पातकम्, सत्यम्, शुचि, सौजन्यम्, अपयशः, मृत्युः, आतपः, व्याधिः, भेषजम्, लाभः, रतिः, शूरः, प्रीतिः, नम्रता

११. **अधोलिखितं गद्यांशं पठित्वा प्रदत्तप्रश्नानामुत्तराणि दत्त**

पुरा भारतवर्षे दुष्यन्तनामा प्रसिद्धः राजा आसीत्। एकदा स आखेटाय वनमगच्छत्। तत्र एकः आश्रमः आसीत्। आश्रमोऽयं कण्वनामकस्य ऋषेः आसीत्। कण्वस्य शकुन्तलानामिका धर्मपुत्री आश्रमस्य निकटे सखिभिः सह क्रीडन्ती आसीत् । दुष्यन्तः ताम् अपश्यत्, तस्याः रूपलावण्येन मोहितश्च अभवत् । शकुन्तला च दुष्यन्तं दृष्ट्वा सम्मोहिता अभवत् । परिणामे तयोर्गान्धर्वविवाहः सञ्जातः । कण्वः तां पतिगृहं प्रेषयितुम् ऐच्छत् । शकुन्तलायाः पतिगृहगमनं दृष्ट्वा आश्रमस्य प्राणिनः, लताः, वनस्पतयश्च चिन्ताकुला अभवन् । यतो हि शकुन्तला तेषु अतीव स्निह्यति स्म । ते शकुन्तलया सहैव स्थातुम् इच्छन्ति स्म । शकुन्तला च तान् त्यक्तुं विस्मर्तुं च नेच्छति स्म । दुष्यन्तशकुन्तलयोः कथा न केवलं प्रेमवर्षिणी एव अपितु मानवप्रकृत्योः समन्वयप्रदर्शिनी च वर्तते ।

(क) कः आखेटाय वनमगच्छत् ?

(ख) कण्वस्य धर्मपुत्री का ?

(ग) दुष्यन्तशकुन्तलयोः कीदृशो विवाहो जातः ?

(घ) शकुन्तलायाः पतिगृहगमने के चिन्ताकुला अभवन् ?

(ङ) दुष्यन्तशकुन्तलयोः कथा कीदृशी वर्तते ?

प्राचीन कालमा भारतखण्डमा दुष्यन्त नामका एक प्रसिद्ध राजा थिए । एकपटक उनी सिकार गर्न जङ्गल गएका थिए । त्यहाँ आश्रम थियो । यो आश्रम कण्व ऋषिको थियो । कण्वकी धर्मपुत्री शकुन्तला आश्रमनजिकै आफ्ना साथीसँग खेलिरहेकी थिइन् । दुष्यन्तले उनलाई देखे र उनको सौन्दर्यमा मोहित भए । दुष्यन्तलाई देखेर शकुन्तला पनि मोहित भइन् । फलस्वरूप तिनीहरूले प्रेमविवाह गरे । कण्वले उनलाई श्रीमान्को घर पठाउन चाहे । शकुन्तलालाई श्रीमान्को घरमा गएको देखेर आश्रमका पशु, लहरा र बोटबिरुवाहरू चिन्तित भए । कारण के थियो भने शकुन्तलाले उनीहरूलाई धेरै माया गर्थिन् । उनीहरू शकुन्तलासँग बस्न चाहन्थे । तिनीहरू शकुन्तलालाई छोड्न वा बिर्सन चाहँदैनथे । यस कारण दुष्यन्त र शकुन्तलाको कथा प्रेमका लागि मात्र नभएर मानव र प्रकृतिको समन्वयको प्रदर्शन पनि हो ।

## व्याकरणानुशीलनम्

१. **अधस्तनानि वाक्यानि पठित्वा अत्र कर्तृक्रियापदयोः सम्बन्धः कीदृशोऽस्तीति विमृशत**

(क) सा नाट्यशालां गच्छति ।

(ख) माता भोजनं रचयति ।

(ग) भगिनी गृहकार्यं लिखति ।

(घ) कृषकः क्षेत्रं कर्षति ।

(ङ) अभिनेता अभिनयं करोति ।

वाच्यं त्रिविधम्– (क) कर्तृवाच्यम् (ख) कर्मवाच्यम् (ग) भाववाच्यञ्च । कर्तृवाच्ये कर्तृपदं प्रधानं भवति । अतः कर्तृपदमाधृत्यैव क्रियापदस्य प्रयोगो भवति ।

यथा– रामः बदरीफलं खादति ।

अत्र कर्तृपदम् – रामः । क्रियापदम् – गच्छति ।

'रामः' इति पदं प्रथमपुरुषस्य एकवचनस्य रूपमस्ति । 'गच्छति' इचि क्रियापदं च प्रथमपुरुषस्य एकवचनस्य रूपमस्ति । कर्तृपदस्य क्रियापदस्य वा वचनादिपरिवर्तनेन उभयोरेव परिवर्तनमावश्यकं भवति ।

यथा– रामः बदरीफलं खादति । रामौ बदरीफलं खादतः ।

रामाः बदरीफलं खादन्ति । त्वं बदरीफलं खादसि ।

२. **अधस्तनानि पाठप्रयुक्तानि पदानि प्रयुज्य कर्तृवाच्ये नवीनानि वाक्यानि रचयत**

सद्विद्या, अपयशः, मृत्युः, छत्रम्, सूर्यः, नागेन्द्रः, दण्डः, गौः, गर्दभः, व्याधिः, भेषजम्, लाभः ।

३. **पाठात् कर्तृवाच्यस्य पञ्च वाक्यानि अन्विष्य लिखत ।**

४. **रिक्तस्थानं पूरयत**

(क) छात्राः पुस्तकानि ................. । (पठति, पठतः, पठन्ति)

(ख) ................. कक्षायाम् आगच्छन्ति । (गुरवः, गुरू, गुरुः)

(ग) वने ................. नास्ति । (वटवृक्षः, वटवृक्षौ, वटवृक्षाः)

(घ) सगरमाथाहिमालयः नेपालस्य महिमा ................. । (वर्तते, वर्तेते, वर्तन्ते)

(ङ) पुत्रौ गृहकार्यं ................. । (करोति, कुरुतः, कुर्वन्ति)

(च) युवां कस्य पुत्रौ ................. । (स्तः, स्थः, स्वः)

(छ) ................. पुरस्कारं लभे । (अहम्, सः, त्वम्)

५. **प्रदत्तसारिणीतः पञ्चदश वाक्यानि निर्मात**

| | | |
|---|---|---|
| नरेशः | | पठावः । |
| पुत्र्यः | वेदान् | पठतः । |
| यूयम् | संस्कृतम् | पठन्ति । |
| छात्रौ | पुराणानि | पठथ । |
| आवाम् | | पठति । |

## रचनात्मकः अभ्यास

१. **प्रकृतिवर्णनं कृत्वा एकम् अनुच्छेदं लिखत ।**

२. **मञ्जूषायाः साहाय्येन अधस्तनं चित्रं पञ्चभिः वाक्यैः वर्णयत, वर्णने कोष्ठकस्य पदानां प्रयोगं च कुरुत**



यथा– (क) अत्र बालिका तृणानि सङ्कलयति ।

**मञ्जूषा**

| |
|---|
| अवकराः, सम्मार्जनी, अवकरभाण्डम्, मार्गाः, तृणानि, जलसेचनम्, विपपाः, उत्पाटयन्ति, मार्जयन्ति, स्वच्छीकुर्वन्ति, क्षिपन्ति |

३. **'नीतिशिक्षया आवश्यकत्वम्' इति विषये एकं संवादं रचयत ।**

## श्रवणपाठः

सतां सज्जनानां सङ्गतिः सत्सङ्गतिः । सत्सङ्गतेः महिमानं सज्जनाः एव जानन्ति । सत्सङ्गतेः प्रभावेण संसारे दुर्जनाः अपि सज्जनायन्ते । दुर्जनानां सङ्गतिः हानिकरी भवति । दुर्जनानां सङ्गत्या मानवस्य जीवनमेव व्यर्थं भवितुं शक्नोति । तेन जीवनं दुर्जीवनायते । अतः बुद्धिमन्तो जनाः दुःसङ्गतिं नेच्छन्ति । ते सदा सत्सङ्गतिमेव आश्रयन्ते । सत्सङ्गतिः सर्वेषां जनानां कृते हितकरी भवति । सज्जनाः स्वभावेनैव सर्वेषां हितं चिन्तयन्ति । ते मनसा, वाचा, कर्मणा च शोभनाः भवन्ति । दुर्जनानान्तु मनसि वाचि कर्मणि च एकरूपता न भवति । ते यत् चिन्तयन्ति, तत् वचसा नहि प्रकटयन्ति, यच्च वचसा प्रकटयन्ति, तत् नहि आचरन्ति । अतः एव ते जनाः दुर्जनाः कथ्यन्ते । सज्जनास्तु सर्वहितचिन्तकाः भवन्ति । अतः सत्सङ्गतिः सर्वहितकारिणी भवति ।

# षष्ठः पाठः

## पाठप्रवेशः

## सहयोगः

अधोदर्शितचित्राणि पश्यन्तु । चित्रस्याधारेण सहयोगस्य विषये विचारयन्तु ।







**मूलपाठः**

# पराक्रमी जटायुः



सीतारामौ सहलक्ष्मणौ वनवासाय पञ्चवट्यां स्थितौ आस्ताम्। दुष्टो रावणः रामस्य पत्नीं सीताम् अपहर्तुम् ऐच्छत्। स मारीचस्य साहाय्येन छलेन रामं लक्ष्मणं च पर्णकुटीराद् बहिर्निःसारितवान्। कामरूपधरो मायावी रावणो भिक्षुवेषेण सीतायाः समक्षं प्राप्तवान्।

सीता पर्णकुटीरे एकाकिनी एवावस्थिता आसीत्। भिक्षाटनाय समागतं भिक्षुं दृष्ट्वा सा भिक्षादानाय समुद्यता बभूव। भिक्षुरूपो रावणस्तां प्रशस्य स्वं वास्तविकं रूपं प्रदर्शितवान्। राक्षसस्य रावणस्य वास्तविकं रूपं दृष्ट्वा सीता सङ्क्रुद्धा अभवत्। तस्य मनोरथं ज्ञात्वा तम् अतर्जयत्। किन्तु रावणो बलेन गृहीत्वा तां अपहर्तुम् उद्यतवान्। बलिनो रावणस्य पुरतः सीता विवशा आसीत्। तस्याः करुणं क्रन्दनं श्रुत्वा वन्याः पशवः, पक्षिणश्च दुःखिता अभवन्। किन्तु रामलक्ष्मणौ कुटीराद् सुदूरङ्गतौ आस्ताम्, यतस्तस्याः क्रन्दनं तयोः कर्णगोचरं नाभवत्। रावणोऽबलां सीतां बलादाकृष्य स्वं पुष्पकं विमानमारोहयत्। सीता स्वस्य उन्मुक्तेश्चेष्टां बहुधा अकरोत्, तथापि तस्याः सर्वे यत्ना निष्फला अभवन्।

रावणः आकाशमार्गेण सीताम् अपहरन्नासीत्। सा च विवशा अधोमुखी विललाप, “हा राम ! हा लक्ष्मण ! दुष्टस्य वशगाया मम करुणं क्रन्दनं किमर्थं न शृणोषि ?” इति। रामं लक्ष्मणं वा सा कुत्रापि न अपश्यत्। ततः वन्यपशून्, वृक्षांश्च सम्बोध्य अवदत्, “हे पशवः ! हे वृक्षाः ! दुष्टात्मा रावणस्तव पत्नीं सीतामपाहरत् इति रामं वदत” इति। तथैव नदीं गोदावरीं च दृष्ट्वा अवदत्, “हे गोदावरि ! दीनायाः मे क्रन्दनं रामं श्रावय”। तस्मिन्नेव काले हाहेति विलपन्ती सा भूमौ गृध्रराजं जटायुम् अपश्यत्। रावणस्य वशगा सीता तं दृष्ट्वा भयपरा

क्रन्दितुम् आरभत, "भो जटायो ! पापकर्मणा राक्षसेण अनाथवद् ह्रियमाणां मां पश्य । एष दुष्टात्मा रावणोऽतीव बलशाली वर्तते । त्वमेतस्य पाशान्मां मोचयितुं न शक्नोषि । किन्तु शीघ्रमुड्डीय मम हरणस्य सर्वमपि वृत्तान्तं रामाय लक्ष्मणाय वा समाख्याहि" इति ।

अवसुप्तो जटायुः सीतायाः सकरुणं विलापं श्रुत्वा अन्तरिक्षे अपश्यत् । तत्र सः रावणेन ह्रियमाणां विलपन्तीं सीतां दृष्ट्वा दुःखितोऽभवत् । ततः तुष्यतुदुर्जनन्यायेन रावणं सान्त्वयन् अवदत्, "हे रावण ! त्वं तु धर्मपरायणः, सत्यसन्धश्च राजा असि । एषा च दाशरथेः रामस्य पत्नी वर्तते । रामेण किमपि अपराद्धम्, किमर्थं त्वमेतादृशम् अपराधं कुरुषे ?" इति । जटायोर्वचनं अशृण्वन् इव रावणस्तां अग्रे नेतुमयतत । तद् दृष्ट्वा जटायुरवदत्, "रे दुष्ट ! त्वं रामस्य पराक्रमं न जानीषे । यथा खरस्तेन भूमौ निपातितस्तथा त्वमपि निपतिष्यसि । रामलक्ष्मणौ अधुना दूरङ्गतौ, किन्तु तयोर्विरोधेन क्षिप्रं नष्टो भविष्यसि । रे दुष्ट ! त्वं कवचधारी, शस्त्रधारी च युवासि, अहं निःशस्त्रो वृद्धोऽस्मि । तथापि यदि शूरोऽसि तर्हि क्षणं तिष्ठ, मया युद्ध्यस्व । मयि जीवति त्वं मम पुत्रवधूं सीतां नेतुं नार्हसि । अहमधुनैव त्वां रथात् पातयिष्यामि" इति ।



रावणोऽभिमानी आसीत् । पक्षिराजस्य जटायोरेतादृशं गर्जनं श्रुत्वा क्रुद्धः स पक्षिराजं प्रहृतवान् । तदा गगने मेघगर्जनस्येव ध्वनिः प्रसृतः अभवत् । जटायोः रावणस्य च मध्ये महायुद्धोऽभवत् । रावणः तीक्ष्णाग्रैः शरैः जटायुं प्राहरत् । जटायुश्च रावणेन प्रहृतानां शरजालानां यथाकथञ्चित् सहनं कृतवान् । ततश्च तीक्ष्णनखाभ्यां स्वस्य चरणाभ्यां रावणस्य देहे बहुशो व्रणान् अकरोत् । रावणोऽपि दशभिस्तीक्ष्णैर्बाणैस्तं हतवान् । किन्तु रावणरथगां वाष्पलोचनां सीतां दृष्ट्वा बाणान्

(ग) कृष्णमन्दिरस्य निर्माता कः ?

(घ) सहस्रशो भक्तजनाः कदा कृष्णमन्दिरम् आगच्छन्ति ?

(ङ) श्रीकृष्णः कस्य अवतारो मन्यते ?

(छ) गीतायां किं प्रतिपादितं वर्तते ?

ललितपुरको बिचमा एउटा सुन्दर कृष्ण मन्दिर छ। मन्दिर सुन्दर ढुङ्गाले बनेको छ। मन्दिरको भित्तामा पौराणिक कथा र पात्रको उल्लेख भेटिन्छ। त्यहाँ सुन्दर चित्रहरू पनि देख्न सकिन्छन्। तत्कालीन राजा सिद्धिनरसिंह मल्लले बनाएको मन्दिर ललितपुरको गौरव मानिन्छ। श्रीकृष्णजन्माष्टमीको दिन यहाँ हजारौँ भक्तजनहरू भगवान् श्रीकृष्णको पूजाआजा गर्न आउने गर्दछन्। बिहानैदेखि भिड जम्मा हुन्छ। यहाँ राष्ट्रका उच्च पदस्थ व्यक्तित्व पनि भगवान् कृष्णको पूजा गर्न आउँछन्। भगवान् कृष्णलाई भगवान् विष्णुको अवतार मानिन्छ। भगवान् कृष्णको दिव्य वाणीले सजिएको गीताले आत्माको स्वरूपको वर्णन गर्दछ। भगवान् कृष्णको रूप र कार्य पूर्ण रूपमा बुझ्न कोही पनि सक्षम छैनन्। भगवान् कृष्णलाई परमब्रह्म भनेर वर्णन गरिएको छ।

**५. अधो लिखितं गद्यभागं पठित्वा जन्तूनां नामानि अभ्यासपुस्तिकायां लिखत**

नेपालः भौगोलिकदृष्ट्या हिमाल-पर्वत-तराइ-भागेषु विभक्तो वर्तते । एतेषु क्षेत्रेषु गहनानि वनानि सन्ति । इमानि वनानि नैकविधा जन्तवो विभूषयन्ति । हिमालक्षेत्रे मृग-भल्लुक-व्याघ्र-जम्बुक-शशकादयः प्राणिनः प्राप्यन्ते । तराइक्षेत्रे एभिः जन्तुभिः सह गज-गण्डकादयो जन्तवो विशेषेण मिलन्ति । जन्तवः कदाचित् कृष्युत्पादनानि खादित्वा मानवान् पीडयन्ति । उन्मत्ता गजा गण्डकाश्च जनधनानां क्षतिं कुर्वन्ति । वानरादयः क्षणमात्रेण सर्वविनाशं विदधति । केचिद् जन्तवो अज-महिषप्रभृतीन् गृहपाल्यान् प्राणिनो हत्वा खादन्ति । एतासां समस्यानां समाधानस्य उपायाः सर्वकारेण अन्वेषणीयाः । प्रकृति-पर्यावरणयोः सन्तुलनाय सर्वेषां जन्तूनां संरक्षणम् आवश्यकं भवति ।

नेपाल भौगोलिक रूपमा हिमाल, पहाड र तराई क्षेत्रमा विभाजित छ। यी क्षेत्र घना जङ्गलले ढाकिएका छन्। यी वनहरू धेरै प्रकारका जनावरले सजिएका छन्। हिरण, उल्लु, बाघ, जम्बु, खरायो जस्ता जनावर हिमाली क्षेत्रमा पाइन्छन्। तराईमा यी जनावरसँगै हात्ती र गैँडा विशेष गरी पाइन्छन्। जनावरले कहिलेकाहीँ कृषि उत्पादन खान्छन् र मानिसलाई पीडा दिन्छन्। उन्मत्त हात्ती र गैँडाले मानिसको सम्पत्तिमा क्षति पुऱ्याउँछ। बाँदर र अन्य जीवले एकै क्षणमा सबै चिज नष्ट गर्छन्। कतिपय जनावरले बाख्रा, भैँसी जस्ता घरेलु जनावरलाई मारेर खान्छन्। यी समस्या समाधानका उपाय सरकारले खोज्नुपर्छ। प्रकृति र वातावरणको सन्तुलनका लागि सबै प्राणीको संरक्षण आवश्यक छ।

**६. अधो लिखितम् अनुच्छेदं पठित्वा नगरस्य समस्यां वदत**

ग्रामेभ्यः प्रतिदिनं शतशो जनाः नगरम् आगच्छन्ति । नगरे विविधानि सौविध्यानि प्राप्यन्ते । अधिका अवसराश्च अत्रैव सम्भवन्ति । परं सम्प्रति नगरं स्वास्थ्यस्य दृष्ट्या प्रतिकूलं जायमानं वर्तते। पङ्क्तिबद्धानि चलन्ति यानानि नगरस्य वायुं प्रदूषितं कुर्वन्ति। अत्रैव अवकरस्य महाराशिः उद्भवति। स्वच्छस्य वायोः अभावात् श्वासप्रश्वासादिरोगेण जना ग्रस्ता भवन्ति। अत्र स्वच्छं जलमपि न प्राप्यते। जलं जीवनम् उच्यते। जलस्य अभावे जीवनं कथं चलेत् ? नगरे ध्वनिप्रदूषणं च वर्धमानं वर्तते । अनेन अस्माकं श्रवणशक्तिः क्षीयमाणा अस्ति। पूर्वजैः स्वच्छतायै ग्रामः, सुविधायै नगरं यत् कथितं तत् सर्वथा उचितमेव प्रतिभाति।

गाउँबाट दैनिक सयौँ मानिस सहर आउने गरेका छन्। सहरले विभिन्न सुविधा प्रदान गर्दछ। यहाँ थप अवसरहरू सम्भव छन्। तर अहिले सहर स्वास्थ्यको दृष्टिले प्रतिकूल बन्दै गएको छ। लहरमा गुड्ने सवारी साधनले पनि सहरको वायु प्रदूषित गर्दछ। यहीँ नै ठुलो मात्रामा फोहोर उब्जिन्छ। स्वच्छ हावा नहुँदा मानिसमा श्वासप्रश्वाससम्बन्धी रोग लाग्ने गरेको छ। यहाँ सफा पानी उपलब्ध छैन। पानीलाई जीवन भनिन्छ। पानीविना जीवन कसरी चल्न सक्छ ? सहरमा ध्वनि प्रदूषण पनि बढ्दै गएको छ। यसका कारण हाम्रो श्रवण शक्ति कमजोर हुँदै छ। स्वच्छताका लागि गाउँ र सुविधाका लागि सहर भन्ने पुर्खाको उक्ति सार्थक देखिन्छ।

**७. अधस्तनं श्लोकं पठित्वा शिक्षकस्य साहाय्येन अन्वयं कुरुत**

कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात् कल्याणमाचरेत् ॥

मनुष्य मन, वचन र कर्मद्वारा नित्य जे गर्छ, त्यसैले उसलाई आकृष्ट गर्छ । त्यसैले सधैँ हितकर कर्म गर्नुपर्छ ।

**८. अधस्तनं श्लोकं यति-गति-लयसंयोजनेन पठत**

मत्या परीक्ष्य मेधावी बुद्ध्या सम्पाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥

बुद्धिमान् मानिसले अनेकौँ पटक बुद्धिले परीक्षण गरेर, अनुभवले निश्चय गरेर, अरूबाट ती विषयमा सुनेर अनि आफैँले राम्ररी बुझेर प्राज्ञिक व्यक्तिसँग मात्र मित्रता गाँस्नुपर्छ ।

## लेखनम्

**१. अधस्तनानां पदानाम् अशुद्धीः निराकुरुत**

शान्तीः, विध्या, अहींसा, शुखावहा, वीनयः, अकिर्तिम्, हन्ती, अनार्थम्, नीत्यम्, क्रोधोम्

**२. अधस्तनानां पदानामर्थं लिखत**

बुधः, हन्ति, धर्मः, दुःखिताः, अवलिप्तः, मैत्री, ईर्ष्यी, सन्तुष्टः, क्रोधनः, अशङ्कितः, मूढव्रतम्

**३. पाठस्थपद्येभ्यः कानिचन सप्त समस्तपदानि अन्विष्य लिखत ।**

यथा– प्रियदर्शनम्

**४. पाठस्य प्रथमस्य श्लोकस्य श्रुतलेखनं कुरुत ।**

**५. शिक्षकस्य साहाय्येन अधस्तनस्य श्लोकस्य सरलार्थं लिखत**

अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च ।

महान् भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥

कर्मप्रतिको अनुराग नै धन, लाभ र कल्याणको मूल हो । परिश्रमी मानिस नै महान् हुन्छ । उसैले अनन्त सुख भोग्छ ।

**६. पाठाधारेण प्रश्नान् उत्तरयत**

(क) विद्या कस्य हेतुः ?

(ख) कः अनर्थं नाशयति ?

(ग) आचारः किं नाशयति ?

(घ) का शान्तेरुत्तम उपायः ?

(ङ) कीदृशाः गुणाः अर्जनीयाः ?

(च) कः परमकल्याणदो वर्तते ?

(छ) का सर्वदैव क्रोधं नाशयति ?

(ज) विनयशीलता किं नाशयति ?

(झ) सर्वदा कीदृशं कर्म कर्तव्यम् ?

(ञ) का सर्वेषां कृते सुखदा भवति ?

**७. पाठेऽभ्यासखण्डे च आगतानि पद्यखण्डानि पठित्वा परस्परं मेलयत**

| | |
|---|---|
| मत्या परीक्ष्य मेधावी | रौद्रसाहसिकेषु च |
| श्रुत्वा दृष्ट्वाथ विज्ञाय | न मैत्रीमाचरेद् बुधः |
| अवलिप्तेषु मूर्खेषु | बुद्ध्या सम्पाद्य चासकृत् |
| तथैवापेतधर्मेषु | प्राज्ञैर्मैत्रीं समाचरेत् |
| कृतज्ञं धार्मिकं सत्यम् | मित्रमत्यागि चेष्यते |
| जितेन्द्रियं स्थितं स्थित्यां | अक्षुद्रं दृढभक्तिकम् |
| प्राज्ञोपसेविनं वैद्यं | लाभस्य च शुभस्य च |
| मित्रवन्तं सुवाक्यञ्च | सुखं चानन्त्यमश्नुते |
| अनिर्वेदः श्रियो मूलं | धार्मिकं प्रियदर्शनम् |
| महान् भवत्यनिर्विण्णः | सुहृदं परिपालयेत् |

८. **मञ्जूषातः समुचितानि विपरीतार्थपदानि चित्वा लिखत**

यथा– दुःखावहा - सुखावहा

| | | | | | |
|---|---|---|---|---|---|
| अहितम् | - | ................ | अनुत्तमा | - | ................ |
| अतृप्तिः | - | ................ | हिंसा | - | ................ |
| यशः | - | ................ | उद्दण्डता | - | ................ |
| कदाचित् | - | ................ | प्रसादः | - | ................ |
| बुद्धिहीनः | - | ................ | एकवारम् | - | ................ |

**मञ्जूषा**

| |
|---|
| श्रेयः, उत्तमा, तृप्तिः, अहिंसा, अकीर्तिः, विनयः, नित्यम्, क्रोधः, मेधावी, असकृत् । |

## व्याकरणानुशीलनम्

१. **प्रदत्तेषु पदेषु इकारान्त-पुंलिङ्गशब्दाद् निर्मितानि पदानि परिचित्य लिखत**

शान्तिः, रविः, तृप्तिः, राशिः, हन्ति, मेधावी, कविः, मैत्रीम्, पतिः, अत्यागि, सत्यवादी, मुनिः, मधुरभाषी, हरिः, घृणी, परभाग्योपजीवी, गिरिः, असन्तोषी, संशयी, अपि, अग्निः

यथा- रविः

२. **ऋषिशब्दस्य रूपावलिं पठित्वा प्रदत्तशब्दानां रूपावलिं लिखत**

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | ऋषिः | ऋषी | ऋषयः |
| द्वितीया | ऋषिम् | ऋषी | ऋषीन् |
| तृतीया | ऋषिणा | ऋषिभ्याम् | ऋषिभिः |

| | | | |
|---|---|---|---|
| चतुर्थी | ऋषये | ऋषिभ्याम् | ऋषिभ्यः |
| पञ्चमी | ऋषेः | ऋषिभ्याम् | ऋषिभ्यः |
| षष्ठी | ऋषेः | ऋष्योः | ऋषीणाम् |
| सप्तमी | ऋषौ | ऋष्योः | ऋषिषु |
| सम्बोधनम् | हे ऋषे ! | हे ऋषी ! | हे ऋषयः ! |

शब्दाः गिरि, भूपति, यति, विधि, जलधि, वह्नि, कपि, कवि ।

३. **सारिण्याः पदानां संयोजनेन वाक्यानि रचयत**

| कर्ता | कर्म | क्रिया |
|---|---|---|
| विधिः | काव्यम् | प्रकाशयति |
| कपिः | सृष्टिम् | रचयन्ति |
| रविः | कदलीम् | करोति |
| ऋषिः | जगत् | ध्यायतः |
| यती | जनान् | खादति |
| कवयः | ईश्वरम् | उपदिशति |

४. **कोष्ठकस्थं निर्देशमनुसृत्य पाठस्य साहाय्येन वाक्यानि परिवर्तयत**

(क) क्षमा क्रोधं नाशयति । (कर्मवाच्ये)

(ख) स अनन्तं सुखं भुङ्क्ते । (कर्मवाच्ये)

(ग) पराक्रमेण अनर्थः नश्यते । (कर्तृवाच्ये)

(घ) सर्वे उत्तमं मित्रं वाञ्छन्ति । (कर्मवाच्ये)

(ङ) जनैः शोभनाः गुणाः अर्ज्यन्ते । (कर्तृवाच्ये)

(च) जनेन मूर्खैः सह मैत्री न क्रियते । (कर्तृवाच्ये)

त्रिविधेषु वाच्येषु कर्तृवाच्ये कर्तृपदं प्रधानं भवति चेत् कर्मवाच्ये कर्म प्रधानं भवति । यत्र कर्तृवाच्ये अकर्मकक्रियायाः प्रयोगो भवति, तत्र वाच्यपरिवर्तनं केवलं भाववाच्ये भवति । वाच्यपरिवर्तनाय उदाहरणानि यथा-

| | |
|---|---|
| १. कृष्णः गाः पश्यति । (कर्मवाच्ये परिवर्तनम्) | कृष्णेन गावः दृश्यन्ते । |
| २. अहं स्वपिमि । (भाववाच्ये परिवर्तनम्) | मया सुप्यते । |
| ३. ते सत्कर्म कुर्वन्ति । (कर्तृवाच्ये परिवर्तनम्) | तैः सत्कर्म क्रियते । |

## रचनात्मकः अभ्यासः

१. **अनुशासनपालनविषये एकम् अनुच्छेदं लिखत ।**

२. **मेलमिलापविषये लघुसंवादं रचयत ।**

## श्रवणपाठः

अन्तरिक्षे अनेकाः खगोलसंरचनाः सन्ति । तासु संरचनासु एका अस्ति- सौरमण्डलसंरचना । सौरपरिवारः एव सौरमण्डलम् । सौरपरिवारे अन्ये अष्ट ग्रहाः सन्ति । केन्द्रे स्थितः सूर्यः परिवारप्रमुखः अस्ति । अन्ये अष्टौ ग्रहाः सूर्यं परिक्रामन्ति । सौरपरिवारस्य सदस्याः सन्ति- १. सूर्यः (Sun) २. बुधः (Mercury) ३. शुक्रः (Venus) ४. पृथिवी (Earth) ५. मङ्गलः (Mars) ६. बृहस्पतिः (Jupiter) ७. शनिः (Saturn) ८. अरुणः (Uranus) ९. वरुणः (Neptune) ।

साम्प्रतं यावत् कृतस्य अनुसन्धानस्य आधारेण वक्तुं शक्यते यत् केवलं पृथिव्यामेव प्राणिजीवनमस्ति । अन्येषु ग्रहेषु जीवनं नास्ति । सौरपरिवारे सूर्यस्य निकटतमो ग्रहोऽस्ति बुधः, दूरतमश्च वरुणः । अष्टासु सदस्यग्रहेषु बृहत्तमोऽस्ति बृहस्पतिः । सौरमण्डले अष्टौ ग्रहान् अतिरिच्य नैकानि पिण्डानि च सन्ति । यथा अनेके क्षुद्रग्रहाः, उल्कापिण्डानि, धूमकेतुः, धूलिकणाश्च सन्ति । ते सर्वेऽपि सौरमण्डलान्तर्गताः खलु । सौरमण्डलस्थानि सर्वाण्यपि वस्तूनि सूर्यस्य गुरुत्वाकर्षणशक्त्या सूर्यं परितः एव भ्रमन्ति । सूर्यं विना तु सौरपरिवारस्य सदस्यानामस्तित्वं कल्पयितुमपि न शक्यते । अतः अस्माकं निवासग्रहस्य पृथिव्याः स्थितिरपि सूर्याश्रिता एव ।

# दशमः पाठः

पाठप्रवेशः

## पुत्रोऽहं पृथिव्याः

**माता भूमिः पुत्रोऽहं पृथिव्याः पर्जन्यः पिता स उ नः पिपर्तु ।**
**अस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः ॥**
**त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः ।**

अथर्ववेदः (१२.१.१२-१३, १५)

**ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥**

- शुक्लयजुर्वेदः, ४०/१

मेरी माता भूमि हुन्, म पृथ्वीको पुत्र हुँ । पर्जन्य (वर्षा गराउने मेघ वा वर्षा) पिता हुन्, उनले हाम्रो पालनपोषण गरुन् । विश्वकर्माहरू यही पृथ्वीमा वेदी निर्माण गरेर यसैमाथि यज्ञ सम्पादन गर्छन् ।

हे पृथ्वी माता ! तिमीलाई नमस्कार छ । प्राणीहरू तिमीबाटै उत्पन्न भएर तिमीमाथि नै विचरण गर्छन् । तिमी नै द्विपाद (दुईखुट्टे) र चतुष्पाद (चारखुट्टे) जीवहरूको भरणपोषण गर्दछ्यौ ।

संसारमा जेजति गतिशील छन, त्यो सबै ईश्वरद्वारा व्याप्त छन् । त्यसकारण यसको त्यागपूर्वक भोग गर, कसैको धनमाथि लोभ नगर ।

मूलपाठः

# प्रकृतिपूजनम्



सर्वविधप्राणिनां जीवनं प्राकृतसंसाधनैरेव सम्भवति । प्राणिनो यत् खादन्ति तत् प्रकृतिरेव प्रयच्छति । श्वसनाय प्राणवायुं प्रकृतिरेव प्रददाति । वस्तूनां दर्शनाय प्रकाशोऽपि प्रकृतिरेव यच्छति । सकलानां प्राणिनां वासस्थानम् इयमेव प्रकृतिरस्ति । जीवनस्य सर्वाण्यपि आधारभूततत्त्वानि केवलं प्रकृतौ एव उपलभ्यन्ते । अतः प्रकृत्या विना जीवनं सर्वथा असम्भवं भवति । यतो हि मानवाः अन्ये प्राणिनश्च प्रकृतेरेव अंशाः सन्ति । पाञ्चभौतिकम् अस्माकं शरीरं पृथिवी, जलम्, तेजः (अग्निः), वायुः, आकाश इत्याख्यैः पञ्चभिः महाभूतैर्निर्मितं वर्तते ।

सर्वविधानां विकासकार्याणां सम्पादनाय प्राकृतस्रोतसां प्रयोगो अपरिहार्यो भवति । सम्प्रति विज्ञानेन यानि चामत्कारिकाणि अन्वेषणानि अनुसन्धानानि च विहितानि सन्ति तानि सर्वाण्यपि प्राकृतसंसाधनाधृतानि वर्तन्ते । मानवानां सौविध्याय यानि कानि अपि आधुनिकानि उपकरणानि आविष्कृतानि तानि सर्वाण्यपि प्राकृतसाधनजानि सन्ति । अत एव समेषां स्थावराणां जङ्गमानाञ्च अस्तित्वं प्रकृतेः कारणेन एव विद्यते । अत एव समेषां प्राणिनां संरक्षणं विकासश्च प्रकृतेः संरक्षणेन एव सम्भवति ।

प्रकृतिः सर्वव्यापिनी वर्तते । अस्मान् परितः प्राणिभिरनिर्मितानि यानि स्वभावेन स्थितानि वस्तूनि सन्ति तानि सर्वाणि प्रकृतौ समायान्ति । प्रकृतिः विविधस्वरूपैः प्रतिपदं प्राणिनां हिताय सर्वव्याप्ततया सेवारता वर्तते । जलम्, वायुः, प्रकाशः, अग्निः, पाषाणम्, मृत्तिका, भूमिः, वृक्षः, नदी, पर्वतः, वनम्, खनिजसम्पत्तिः, वर्षा, मेघः इत्यादीनां पर्यावरणतत्त्वानां समष्टिरेव प्रकृतिरस्ति । प्रकृतिः प्राकृतिकं पर्यावरणमस्ति या अस्मान् परितो व्याप्ता सती अस्मभ्यं सुरक्षात्मकं कवचं प्रयच्छति । प्रकृतिर्जगत् सृजति पालयति च परन्तु रुष्टायां प्रकृत्यां सर्वनाशोऽपि सम्भवति । मानवानाम् अप्राकृतिकैः कार्यकलापैः, संसाधनानाम् अतिदोहनेन च प्रकृतिः रुष्टा भवति ।

प्रकृतेर्यथारूपं संरक्षणस्य पूजनस्य चास्माकं शास्त्रीया व्यावहारिकी च परम्परा विद्यते । प्रायेण प्राकृतवस्तूनां पूजनस्य परम्परा वैदिककालादेव अद्यपर्यन्तम् अनवरतं प्रचलन्ती दृश्यते । वयं पृथिवीं मातृरूपेण पूजयामः । प्रातर्जागरणानन्तरं वयं भूमिं प्रणम्य तत्र पादौ स्थापयामः । पृथिवी अन्न-जलादिभिरस्माकं पालनं पोषणञ्च करोति । तेन पृथिवी समेषां प्राणिनां माता सिद्धयति । अथर्ववेदे भूमिं मातृरूपेण, तस्याः भोक्ता मानवः पुत्ररूपेण, वर्षाकरो मेघं च पितृरूपेण वर्णितो वर्तते-

**माता भूमिः पुत्रोऽहं पृथिव्याः पर्जन्यः पिता स उ नः पिपर्तु ।** (१२.१.१२)

यदा पितृरूपो मेघो वर्षाभिर्मातृरूपं पृथिवीं सिञ्चति तदा पृथिवी सस्यशालिनी भूत्वा अस्मान् पालयति । प्रकृत्या वरदानरूपा इयं पृथिवी सदा वन्दनीया संरक्षणीया च वर्तते ।

नैपालका जना न केवलं पृथिवीम् अपि तु बहुविधानि प्राकृतवस्तूनि पूजयन्ति । वयं पाषाणं देवरूपेण पूजयामः । अस्माकं कृते मृत्तिका पवित्रा पूजनीया च वर्तते । जनाः प्रातः सवन्दनं सूर्यं प्रणम्य आदिवसमूर्जां समर्जन्ति । सूर्य ऊर्जायाः स्रोतो वर्तते । जनास्तं जलार्घ्यादिभिः पूजयित्वा शुभदिनं कामयन्ते । शीतलतायाः, ज्योत्स्नायाश्च दाता चन्द्रमाश्च देवरूपेण पूज्यते । अग्निवायुजलानां पूजनसंरक्षणयोः परम्परा अस्माकं धर्मस्य संस्कृतेश्च वैशिष्ट्यरूपेण विकसिता वर्तते । वायुदेवोऽस्मभ्यं प्राणवायुं प्रयच्छति । जलदेवोऽस्माकं पिपासां शमयति, मल-किल्विषादीनि च अपनयति । अग्निरस्माकं भोजनं पचति, जठराग्निरूपेण तद्भोजनं पाचयति च । अग्निवायुजलानि अस्माकं जीवनसाधनानि वर्तन्ते । तेनैतेषां पूजनं भुक्तिमुक्त्योः साधनरूपेण क्रियते । अत्र आकाशरूपायाः शून्यतायाश्च पूजनं भवति । पर्वतस्य, हिमालयस्य, नद्याः, समुद्रस्य, विविधतीर्थस्थलानां च सश्रद्धं पूजा भवति । भगवता श्रीकृष्णेन विहिताया गोवर्धनपर्वतस्य पूजायाः प्रसङ्गः पौराणिकग्रन्थेषु प्रसिद्धः, प्रेरकश्च वर्तते ।

वृक्षाणां पूजनस्य परम्पराऽपि अस्माकं संस्कृतौ अविच्छिन्नरूपेण प्रचलन्ती विद्यते। जनास्तुलसी-पिप्पलादीनां वनस्पतीनां संरक्षणपूर्वकं पूजनं कुर्वन्ति। एतेषां पूजनस्य महत्त्वं न केवलं शास्त्रवचनैः अपि तु वैज्ञानिकैः अपि प्रतिपादितमस्ति। तुलसी-पिप्पलौ सर्वाधिक्येन प्राणवायुप्रदायकौ स्त इति अनुसन्धानसिद्धं वर्तते। वनसंरक्षणस्य हेतोर्जना वनदेवीं संस्थाप्य पूजयन्ति। 'अकारणं तृणमात्रस्यापि हननं नैव कर्तव्यम्, यदि क्रियते तर्हि कर्ता पापभाग् भवति' इति शास्त्रवचनेन प्रकृतेः संरक्षणस्य अस्माकं सुदूरां परम्परां दर्शयति।

अस्माकं देशे पशूनां पक्षिणां च पूजनस्य संस्कृतिर्विद्यते। जना दुग्ध-गोमय-गोमूत्रादीनां दात्रीं गां मातृरूपेण पूजयन्ति। वृषभस्य, कुक्कुरस्य, काकस्य च पर्वविशेषेषु पूजा भवति। पृथग्जातीया जनाः पृथक् पृथक् पशुपक्षिणां पूजनं विदधति। अत्र नागरूपेण सर्पस्य पूजा भवति। सनातनाः कच्छपस्य, मत्स्यस्य, वराहस्य च पूजा विष्णुरूपेण सोल्लासं कुर्वन्ति। अत्र मानवा अपि विविधरूपेण पूजिता भवन्ति। भगिनी भ्रातरं पूजयति, भ्राता च भगिनीं पूजयति। अनुजा अग्रजान् पूजयन्ति, सश्रद्धं व्यवहरन्ति च। पुत्राः पितरौ पूजयन्ति। शिष्या गुरून् समर्चन्ति। सर्वे जनाः स्वेषाम् इष्टदेवान् यथाविधि पूजयन्ति। प्रकृतेः प्राकृतवस्तूनां च पूजनं संरक्षणं च सर्वधर्मानुयायिनां सर्वजातीयानां च जनानां सामान्यं वैशिष्ट्यं वर्तते।

प्रकृतौ यत्किमपि वस्तुक्रियादिकं वर्तते, तत्सर्वमपि सृष्टेः सञ्चालनायावश्यकमेव। यदि तेषु एकमपि लुप्तं विकृतं वा भवति तर्हि पर्यावरणम् असन्तुलितं जायते। पर्यावरणेऽसन्तुलिते सति अनेका विपत्तय आपद्यन्ते। अत एव शुक्लयजुर्वेदः 'द्यौः शान्ति....' इत्यादिना मन्त्रेण आकाश-पृथिवी-जलादिषु सर्वविधप्राकृतवस्तुषु शान्तिं कामयते। शान्तिकामा वयं न केवलं स्वजनानाम् अपि तु सर्वेषां हितमिच्छामः। 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्' इत्यस्माभिः पूर्वजेभ्यः शिक्षितः परम्परया अङ्गीकृतश्च मन्त्रोऽस्ति।

इदानीं मानवा लोभवशाद् अज्ञानेन च प्राकृतसंसाधनानां दुरुपयोगं कुर्वाणाः सन्ति। स्वस्य जीवननिर्वाहस्य कृते प्राकृतस्रोतसाम् आवश्यकाद् अधिकं दोहनं विधीयमानमस्ति। प्रभूतस्य धनार्जनस्य अस्वाभाविकी स्पर्धा च तीव्रतया वर्धमाना दृश्यते। पर्यावरणस्य सुरक्षामविचार्य निर्मिताभिः भौतिकविकासयोजनाभिः, सुविचारितयोजनारहितैः विकासनिर्माणकार्यैश्च प्रकृतिः प्रतिदिनं प्रताड्यमाना वर्तते। उद्योगजैर्मलैः, यान-यन्त्रादिभिरुत्सृष्टैर्धूमैश्च स्थले जले वायैश्च प्रदूषणं वर्धमानमस्ति। वृक्षाणाम् अतिकर्तनेन, आणविक-विस्फोटनेन च पृथिव्यास्तापमानं प्रतिदिनं वर्धमानं वर्तते। एतादृशैः प्रकृतिविरोधिभिः कार्यकलापैर्मानवाः प्रकृतिमात्रस्य न अपि तु स्वेषामपि विनाशम् आह्वयन्तो दृश्यन्ते।

विकृतायां प्रकृतौ अस्माकमेव हानिर्भवति । अत एव अद्यतनसमये प्रकृतेः संरक्षणाय पर्यावरणशिक्षा अत्यावश्यकी प्रतिभाति । प्राचीनकालेऽस्माकं पर्यावरणं संरक्षितम्, सन्तुलितं चासीदिति वेदोपदिषदादीनामध्ययनेन ज्ञायते । तदानीं जनाः शास्त्रनिर्दिष्टान् नियमान् परिपालयन्ति स्म । परन्तु अद्यतनसमये सुशिक्षायाः, संस्कारस्य चाभावेन कतिपयजनानां चिन्तनं क्रिया च आधिक्येन स्वार्थाय भवति, न तु परार्थाय । तान् सन्मार्गमानीय प्रकृतेः संरक्षणाय पौरस्त्यवाङ्मयाधृतायाः शिक्षायाः प्रसारः कार्यः । 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्' इत्यादिभिः उपनिषदुपदेशैर्जनाः प्रशिक्षणीयाः । प्रकृतेः निखिलसृष्टेः च संरक्षणाय अस्माभिः प्रकृतिपूजकैः प्रकृतिविरोधिनां क्रियाकलापानां रोधने सचेष्टैर्भाव्यम् । अस्माभिः एतदपि कदापि न विस्मरणीयम् - 'प्रकृतिः समेषां प्राणिनां जीवनाधारो वर्तते' इति ।

सबै प्रकारका प्राणीहरूको जीवन प्रकृतिक स्रोत-साधनबाट नै सम्भव हुन्छ । प्राणीहरू जे खान्छन् त्यो सबै प्रकृतिले दिन्छ । सास फेर्नका लागि अक्सिजन प्रकृतिले नै दिन्छ । वस्तुहरूलाई हेर्न प्रकाश प्रकृतिले नै दिन्छ । सबै प्राणीको वासस्थान यही प्रकृति नै हो । जीवनका सबै आधारभूत तत्त्वहरू प्रकृतिमा मात्र उपलब्ध छन् । त्यसैले प्रकृतिविना जीवन सबै दृष्टिले असम्भव छ । यसै पनि मानिस र अन्य प्राणीहरू पनि प्रकृतिकै अंश हुन् । हाम्रो पाञ्चभौतिक शरीर पृथिवी, जल, तेज, वायु र आकाश नामक पञ्चमहाभूतबाट निर्माण भएको छ ।

सबै प्रकारका विकास कार्यहरू सम्पन्न गर्न प्राकृतिक स्रोतको प्रयोग निर्विकल्प हुन्छ । अहिले विज्ञानद्वारा जेजति चामत्कारिक खोज अनुसन्धान गरिएका छन्, ती सबै नै प्रकृतिक संसाधनमा आधारित छन् । मानिसको सुख-सुविधाका लागि जेजति आधुनिक उपकरणहरू आविष्कार गरिएका छन्, ती सबै प्राकृतिक स्रोतसाधनका उपज हुन् । त्यसैले सबै स्थावर (स्वयम् हिँड्डुल नगर्ने वस्तु) र जङ्गम (हिँड्डुल गर्ने वस्तु) को अस्तित्व प्रकृतिको कारणले नै छ । त्यसैले सबै प्राणीको संरक्षण र विकास प्रकृतिको संरक्षणबाट मात्र सम्भव छ ।

प्रकृति सर्वव्यापी (सबैतिर फैलिएको) छ । हाम्रो वरिपरि प्राणीद्वारा निर्माण नगरिएका जति पनि आफ्नो स्वभावमा रहेका (विकृति नआएका) वस्तु छन्, ती सबै प्रकृतिभित्र पर्दछन् । प्रकृति आफ्ना विभिन्न स्वरूपद्वारा प्रत्येक पाइलामा प्राणीहरूको हितमा सर्वव्यापक बनेर सेवारत छ । पानी, वायु, प्रकाश, अग्नि, ढुङ्गा, माटो, जमिन, रुख, नदी, पर्वत, वन, खनिज पदार्थ, वर्षा, बादल आदि वातावरणीय तत्त्वको समष्टिगत रूप नै प्रकृति हो ।

प्रकृति प्राकृतिक पर्यावरण हो, जसले हाम्रो वरिपरि व्याप्त भएर हामीलाई सुरक्षात्मक कवच (घेरा) प्रदान गर्दछ । प्रकृतिले संसारको रचना र पालन पनि गर्दछ, तर प्रकृति रिसाएमा सर्वनाश पनि सम्भव हुन्छ । मानिसका अप्राकृतिक क्रियाकलाप र प्राकृतिक स्रोतसाधनको अति दोहनले प्रकृति रुष्ट हुन्छ (रिसाउँछ) ।

प्रकृतिको वास्तविक स्वरूपमा संरक्षण र पूजा गर्नु हाम्रो शास्त्रीय र व्यावहारिक परम्परा गरिआएको छ । सबैजसो प्राकृतिक वस्तुको पूजा गर्ने परम्परा वैदिक कालदेखि आजसम्म पनि निरन्तर चलिरहेको देखिन्छ । हामी पृथिवीलाई आमाका रूपमा पुज्दछौँ । हामी बिहान उठेपछि जमिनलाई ढोगेर त्यहाँ पाउ राख्दछौँ । पृथिवीले अन्न, जल आदिद्वारा हाम्रो पालनपोषण गर्दछिन् । त्यसले पृथिवी सबै प्राणीको आमा भएको प्रमाणित गर्दछ । अथर्ववेदमा भूमि (पृथिवी) लाई आमाका रूपमा, त्यसको उपभोगकर्ता मानिसलाई छोराका रूपमा र वर्षा गराउने बादललाई बुबाका रूपमा वर्णन गरिएको छ, जस्तै :

मेरी माता भूमि हुन्, म पृथ्वीको पुत्र हुँ । वर्षा गराउने बादल वा वर्षा पिता हुन्, उनले हाम्रो पालनपोषण गरुन् ।

जब बुबारूपी मेघले वर्षाद्वारा पृथिवीको सिँचाइ गर्छन् तब पृथिवी अन्नले भरिपूर्ण भएर हाम्रो पालन-पोषण गर्छिन् । प्रकृतिको वरदानका रूपमा रहेकी यी पृथिवी सधैँ वन्दना र संरक्षण गर्न योग्य छिन् ।

नेपालका मानिस पृथिवीलाई मात्र होइन, धेरै प्रकारका प्राकृतिक वस्तुलाई पूजा गर्छन् । हामी ढुङ्गालाई देवताका रूपमा पुज्दछौँ । हाम्रा लागि माटो पवित्र र पूजनीय छ । मानिसहरू बिहान सूर्यलाई वन्दनासहित नमस्कार गरेर दिनभरका लागि ऊर्जा प्राप्त गर्दछन् । सूर्य ऊर्जाको स्रोत हो । मानिस सूर्यलाई जल, अर्घ्य आदिले पूजा गरेर शुभदिनको कामना गर्दछन् । शीतलता र ज्योतिको दाताका रूपमा चन्द्रमालाई पनि देवताका रूपमा पूजा गरिन्छ । वायु, जल र अग्निको पूजा गर्ने परम्परा हाम्रो धर्म र संस्कृतिको विशेषताका रूपमा विकसित भएको छ । वायुदेवले हामीलाई प्राणवायु (अक्सिजन) दिन्छन् । जलदेवले हाम्रो प्यास (तिर्खा) मेटाउँछन्, फोहोरमैला पनि हटाइदिन्छन् । अग्निले हाम्रो भोजन पकाउँछन्, जठराग्निका रूपमा त्यो भोजन पचाउँछन् पनि । अग्नि, वायु र जल हाम्रो जीवनका साधन हुन् । त्यसैले यिनको पूजा भुक्ति र मुक्तिको साधनका रूपमा गरिन्छ । यहाँ आकाशरूपी शून्यताको पनि पूजा हुन्छ ।

पर्वत, हिमाल, नदी, समुद्र र विभिन्न तीर्थस्थलको पनि श्रद्धापूर्वक पूजा हुन्छ । भगवान् श्रीकृष्णद्वारा गरिएको गोवर्धन पर्वतको पूजाको प्रसङ्ग पौराणिक ग्रन्थहरूमा प्रसिद्ध र प्रेरणादायक पनि छ ।

वृक्षको पूजा गर्नु पनि हाम्रो अविच्छिन्न परम्परा हो । मानिस तुलसी, पिपल आदि वनस्पतिको संरक्षणपूर्वक पूजा गर्छन् । यिनीहरूको पूजाको महत्त्व शास्त्र वचनबाट मात्र नभई वैज्ञानिकबाट पनि प्रतिपादन गरिएको छ । तुलसी र पिपल अक्सिजनका ठुला दाता भएको अनुसन्धानबाट सिद्ध छ । वनको संरक्षणका लागि मानिस वनदेवीको स्थापना गरेर तिनको पूजा गर्छन् । 'विनाकारण घाँसको एक त्यान्त्रो पनि चुँड्नु पनि हुँदैन, यदि चुँडिन्छ भने त्यसो गर्ने व्यक्ति पापको भागी हुन्छ' भन्ने शास्त्र वचनले प्रकृति संरक्षणको हाम्रो धेरै पुरानो परम्परालाई देखाउँछ ।

हाम्रो देशमा पशु र पन्छीको पनि पूजा गर्ने संस्कृति विद्यमान छ । मानिसहरू दुध, गोबर, गहुँत आदि दिने गाईलाई आमाका रूपमा पूजा गर्छन् । गोरु, कुकुर र कागको पनि पर्वविशेषमा पूजा हुन्छ । फरक जातिका मानिसहरू फरकफरक पशुपक्षीको पूजा गर्छन् । यहाँ नागका रूपमा सर्पको पूजा हुन्छ । सनातनी कछुवा, माछा र बँदेललाई विष्णुका रूपमा उल्लासपूर्वक पूजा गर्दछन् । यहाँ मानिस पनि विभिन्न रूपमा पुजिन्छन् । दिदीबहिनीले दाजुभाइलाई पूजा गर्छन् र दाजुभाइले दिदीबहिनीलाई पुज्छन् । अनुज अग्रजलाई पुज्छन् र श्रद्धापूर्वक व्यवहार गर्छन् । छोराहरू मातापितालाई पुज्छन् । शिष्यहरू गुरुलाई निरन्तर पुज्दछन् । सबै मानिस आआफ्ना इष्टदेवताको विधिपूर्वक पूजा गर्छन् । प्रकृति र प्राकृतिक वस्तुको पूजा र संरक्षण सबै धर्म मान्ने र सबै जातजातिका मानिसको सामान्य विशेषता हो ।

प्रकृतिमा जति पनि वस्तु र क्रियाहरू देखिन्छन्, ती सबै सृष्टिको सञ्चालनका लागि आवश्यक छन् । तीमध्ये एउटा पनि लोप भयो वा बिग्रियो भने पर्यावरण असन्तुलित हुन्छ । पर्यावरण असन्तुलित भएमा अनेक विपत्तिहरू आउँछन् । त्यसैले शुक्लयजुर्वेदले 'द्यौः शान्ति....' यो मन्त्रले आकाश, पृथिवी, जल आदि सबै प्राकृतिक वस्तुमा शान्तिको कामना गरेको छ । शान्तिका पक्षधर हामी केवल परिवार र आफन्तजनको मात्र नभई सबैको हित चाहन्छौँ । 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्' (सबै सुखी होऊन्, सबै नीरोगी होऊन् ।

सबै प्रसन्न देखियून्, कोही पनि दुःखको भागी नहोओस् ।) यो हामीले हाम्रा पूर्वज (पुर्खा) बाट सिकेको र अङ्गीकार गरेको मन्त्र हो ।

अहिले मानिस लोभको वशमा परेर र अज्ञानका कारण पनि प्रकृतिक संसाधनको दुरुपयोग गरिरहेका छन् । आफ्नो जीवन निर्वाहका लागि आवश्यकभन्दा बढी प्राकृतिक स्रोतको दोहन गरिरहेका छन् । अत्यधिक धन आर्जन गर्ने अस्वाभाविक प्रतिस्पर्धा पनि तीव्र गतिमा बढिरहेको देखिन्छ । पर्यावरणको सुरक्षालाई ख्याल नगरीकन निर्माण गरिएका भौतिक विकासका योजनाले र योजनाविहीन विकास निर्माणका कार्यले प्रकृति प्रतिदिन प्रताडित भइरहेकी छिन् । उद्योगबाट निस्किएको फोहोर र सवारीसाधन तथा यन्त्रउपकरणबाट निस्किएको धुवाँले स्थल, जल र वायुको प्रदूषण बढिरहेको छ । वनविनाश र आणविक विस्फोटले पृथिवीको तापमान प्रतिदिन बढिरहेको छ । यस्ता प्रकृति विरोधी क्रियाकलापद्वारा मानिस प्रकृतिको मात्र नभई आफ्नै विनाश निम्त्याइरहेका देखिन्छन् ।

प्रकृति बिग्रिएमा हाम्रै हानि हुन्छ । त्यसैले अहिलेको समयमा प्रकृतिको संरक्षणका लागि पर्यावरण शिक्षा अत्यावश्यक देखिन्छ । प्राचीन समयमा हाम्रो पर्यावरण संरक्षित र सन्तुलित थियो भन्ने तथ्य वेद, उपनिषद् आदिको माध्यमबाट थाहा हुन्छ । त्यतिवेला मानिस शास्त्रले निर्दिष्ट गरेका नियमको पूर्ण रूपले पालना गर्दथे । तर, आजको समयमा सुशिक्षा र संस्कारको अभावले कतिपय मानिसको चिन्तन र क्रिया प्रायः स्वार्थका लागि हुन्छ, अरू वा समाजका लागि हुँदैन । तिनीहरूलाई सही बाटोमा ल्याएर प्रकृतिको संरक्षणका लागि पौरस्त्य वाङ्मयमा आधारित शिक्षाको प्रचार प्रसार गर्नु आवश्यक छ । 'तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्' (भगवान्को अंशका रूपमा रहेका प्राकृतिक संसाधनको त्यागपूर्वक भोग गर, कसैको धनमाथि लोभ नगर ।) यो उपनिषद्निर्दिष्ट उपदेशले मानिसहरूलाई प्रशिक्षित गर्नुपर्छ । प्रकृति र सम्पूर्ण सृष्टिको संरक्षणका लागि हामीजस्ता प्रकृतिपूजकले प्रकृतिविरोधी क्रियाकलापलाई रोक्न सजग हुनुपर्छ । हामीले यो कहिल्यै भुल्नुहुँदैन - प्रकृति सबै प्राणीको जीवनको आधार हो ।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| संसाधनम् | सम्पदा | संसाधन, स्रोतसाधन | Resources |
| प्रकृतिः | सृष्टिः, निसर्गः | प्रकृति | Nature |
| श्वसनम् | प्राणवायोरन्तर्वहिर्गमनक्रिया | सास फेर्ने काम | Respiration |
| सर्वथा | सर्वप्रकारेण | सबै प्रकारले | By all means |
| पाञ्चभौतिकम् | पञ्चमहाभूतैर्निर्मितम् | पञ्चमहाभूतले बनेको | Composed of the five elements |
| पञ्च महाभूतानि | पृथिवी, जलम्, तेजः, वायुः, आकाशः इत्याख्यानि पञ्चतत्त्वानि | पृथिवी, जलम्, तेज, वायु, आकाश नामक पञ्चतत्त्व | The five elements |
| सम्पादनम् | निष्पादनम् | सम्पन्न गर्नु, काम ठिक किसिमले पूरा गर्नु | Accomplishing |
| निर्विकल्पम् | विकल्परहितम् | विकल्प नभएको | Optionless |
| सम्प्रति | इदानीम् | आजभोलि, अहिले | Now a days |
| सौविध्यम् | सुविधा | सुविधा | Facility |
| स्थावरः | अचञ्चलः, अचलवस्तु, अचरः | अचल, आफैँ चल्ने, डुल्ने नगर्ने, अचर | Immoveable |
| जङ्गमः | सततगतियुतः, चरः, अस्थावरः | हिँडडुल गर्ने वस्तु, चर | Moveable |
| रुष्टः | क्रोधयुक्तः | रिसाएको | Being angry |
| भोक्ता | भोगकर्ता | भोग गर्ने व्यक्ति | One who enjoys or eats, Consumer |
| मेघः | जलधरः | पानी भएको बादल | Cloud |
| पर्जन्यः | मेघः | वर्षा गराउने बादल | Thundering cloud |
| पिपर्तु | पालयतु | पालनपोषण गरुन् | Wish to take care |
| सस्यशालिनी | अन्नादिभिः पूर्णा | अन्नले भरिएकी | Full of grains |
| आदिवसम् | दिवसपर्यन्तम् | दिनभर, दिन रहेसम्म | Till the day, From of ever since day |

| | | | |
|---|---|---|---|
| ऊर्जा | बलम्, शक्तिः | ऊर्जा, शक्ति | Power |
| प्राणवायुः | श्वासः, श्वसितम् | सास, अक्सिजन | Oxygen for breathing |
| मलः | पापम्, किट्टम् | मयल, फोहोर | Dirt, Impurity |
| किल्विषम् | पापम्, अपराधः, रोगः | पाप, अपराध, रोग | Fault, Guilt, Disease |
| भुक्तिः | भोजनम्, भोगः | आहार, लौकिक सुख | Food, Injoyment |
| मुक्तिः | मोचनम्, मोक्षः, संसारबन्धनराहित्यम् | मोक्ष, संसारको बन्धनबाट मुक्ति | Release, Liberation, The last of the four ends of human existance |
| तृणम् | घासः | घाँस, त्यान्त्रो | Grass, A blade of grass |
| हननम् | मारणम् | मार्ने काम, नाश गर्नु | Killing, Hurting |
| क्रिया | कर्म, कार्यम्, करणम् | क्रिया, काम | Action, Act |
| लुप्तम् | नष्टम्, छिन्नम् | लोप भएको, हराएको | Lost, destroyed |
| विकृतम् | मलिनीकृतम्, विकारयुतम् | बिग्रिएको | Changed, Deformed |
| शान्तिकामः | शान्त्यभिलाषी | शान्तिको कामना गर्ने, शान्ति चाहने | Pacifist |
| निरामयः | रोगरहितः, नीरुजः | निरोगी, रोग नभएको | Healthy |
| मा | न | निषेधार्थक अव्यय | A particle of prohibition usually joined with the imperative |
| कश्चित् | कश्चन | कुनै | Someone |
| दुःखभाक् | दुःखी | दुःखी | Distressed, Pained |
| अङ्गीकृतः | स्वीकृतः | स्वीकार गरिएको | Adopted |
| कुर्वाणः | विदधानः | गर्दै | Is doing |

| | | | |
|---|---|---|---|
| प्रभूतम् | प्रचुरम् | धेरै | Much |
| स्पर्धा | प्रतिस्पर्धा | प्रतिस्पर्धा, होडबाजी | Competition |
| प्रताड्यमान: | प्रकृष्टेन ताडनं प्राप्नवन् | पिटिइरहेको | Being beaten |
| उत्सृष्ट: | त्यक्त: | छोडिएको, त्यागिएको | Left, Produced by |
| तापमानम् | तापपरिमाणम् | तापमान | Temperature |
| अद्यतन: | अद्यभव: | आजको | The current day, Period of the current day |
| आधिक्यम् | अधिकता, अतिशयता | धेरै हुनुको भाव, धेरैपन | Superiority, Excess |
| परार्थम् | परनिमित्तकम् | अरूका लागि | For the sake of others |
| पौरस्त्यम् | पुरो भवम्, प्रथमम् | पहिलो, पूर्वको | Foremost, First |
| मा गृध: | मा अभिकाङ्क्षी: | इच्छा नगर, लोभ नगर | Don't desire for |
| निखिलम् | सकलम्, समग्रम् | भएभरका सबै | Complete, Whole, Entire |
| रोद्धुम् | अवरोधनं कर्तुम् | रोक्न, गतिरोध गर्न | To obstruct, To stop |
| कदापि | कस्मिन्नपि काले | कहिले पनि | Never |

## अभ्यास:

### श्रवणं भाषणं च

१. **शिक्षकमुखात् श्रुत्वा पदानि अनूच्चारयत**

संसाधनानि, प्रकृतिपूजनम्, रोद्धुम्, सचेष्टै:, विस्मरणीयम्, प्रताड्यमाना:, कच्छपस्य, तुलसीपिप्पलादीनाम्, यानयन्त्रादिभि:, तृणमात्रस्य, जङ्गमानाम्, पाञ्चभौतिकम् ।

२. **पाठादुद्धृतस्य अधस्तनस्य अनुच्छेदस्य श्रुतलेखनं कुरुत**

इदानीं मानवा लोभवशाद् अज्ञानेन च प्राकृतसंसाधनानां दुरुपयोगं कुर्वाणा: सन्ति । स्वस्य

जीवननिर्वाहस्य कृते प्राकृतस्रोतसाम् आवश्यकाद् अधिकं दोहनं विधीयमानमस्ति । प्रभूतस्य धनार्जनस्य अस्वाभाविकी स्पर्धा च तीव्रतया वर्धमाना दृश्यते । पर्यावरणस्य सुरक्षामविचार्य निर्मिताभिः भौतिकविकासयोजनाभिः, सुविचारितयोजनारहितैः विकासनिर्माणकार्यैश्च प्रकृतिः प्रतिदिनं प्रताड्यमाना वर्तते । उद्योगजैर्मलैः, यान-यन्त्रादिभिरुत्सृष्टैर्धूमैश्च स्थले जले वायैश्च प्रदूषणं वर्धमानमस्ति । वृक्षाणाम् अतिकर्तनेन, आणविक-विस्फोटनेन च पृथिव्यास्तापमानं प्रतिदिनं वर्धमानं वर्तते । एतादृशैः प्रकृतिविरोधिभिः कार्यकलापैर्मानवाः प्रकृतिमात्रस्य न अपि तु स्वेषामपि विनाशम् आह्वयन्तो दृश्यन्ते ।

३. **अधस्तनं पद्यं कक्षायां श्रावयित्वा सखिभिः सह विमर्शनेन तत्रोपस्थापितं प्रेरकपक्षमन्विष्य कथयत**

धत्ते भरं कुसुमपत्रफलावलीनां घर्मव्यथां वहति शीतभवां रुजं च ।
यो सर्वमर्पयति चान्यसुखस्य हेतोस्तस्मै वदान्यगुरवे तरवे नमोऽस्तु ॥

जसले फूल, पात र फलहरूको भारलाई धारण गर्दछ (बोक्छ), घाम (गर्मी) र ठन्डीबाट उत्पन्न दुःखकष्टलाई आफू सहन्छ र आफ्ना सबैकुरा अरूको सुखका लागि अर्पण गर्दछ, त्यस्तो उदार र श्रेष्ठ गुरु वृक्षलाई नमस्कार छ ।

४. **पाठस्य पञ्चममनुच्छेदं सखिमुखात् श्रुत्वा तत्रत्यविषयान् प्रति स्वप्रतिक्रियां प्रकटयत ।**

५. **वाक्यानि श्रुत्वा सत्यवाक्ये 'आम्', असत्यवाक्ये च 'न' इति वदत**

(क) प्रकृतिरेव अस्मान् परिपालयति ।
(ख) नैपालका जनाः प्राकृतवस्तूनां पूजा नैव कुर्वन्ति ।
(ग) प्रकृतिविरोधिभिः कार्यकलापैः जनाः स्वकीयमेव विनाशमाह्वयन्ति ।
(घ) मानवाः स्वार्थवशात् प्राकृतसंसाधनानामतिदोहनं कुर्वाणाः सन्ति ।
(ङ) प्रकृतेः संरक्षणं केवलं सर्वकाराणां दायित्वमस्ति ।

६. **पाठस्य द्वितीयमनुच्छेदं श्रुत्वा एकपदेन प्रश्नानामुत्तरं वदत**

(क) प्राणिनां संरक्षणं विकासश्च केन सम्भवति ?
(ख) वैज्ञानिकानि अनुसन्धानानि कमाधृत्य विधीयन्ते ?

(ग) प्रकृतेः कारणेन केषामस्तित्वं विद्यते ?

(घ) विकासकार्याणां सम्पादनाय केषां प्रयोगोऽनिवार्यो भवति ?

(ङ) 'सर्वाण्यपि' इत्यत्र द्वे पदे के ?

**७. पाठस्य प्रथममनुच्छेदं प्रवाच्य कक्षायां श्रावयत ।**

**८. पाठस्य प्रमुखविषयवस्तूनि स्वमातृभाषया कथयत ।**

**९. श्रवणपाठं श्रुत्वा अधस्तनप्रश्नान् एकवाक्येन उत्तरयत**

(क) कस्यां भाषायां व्याकरणस्य सर्वाधिकं महत्त्वं विद्यते ?

(ख) पाणिनिमुनिना कृतस्य व्याकरणग्रन्थस्य नाम किम् ?

(ग) संस्कृतभाषायाः केषाञ्चन त्रयाणां प्रसिद्धानां व्याकरणकाराणां नामानि वदत ।

(घ) वेदस्य मुखं किम् ?

(ङ) शिक्षाग्रन्थस्य रचयिता कः ?

(च) वेदस्य अध्ययनात् पूर्वं कस्य अध्ययनमपरिहार्यं मन्यते ?

(छ) व्याकरणं किमर्थं शब्दशास्त्रं कथ्यते ?

## पठनम्

**१. पाठस्य आदौ प्रदत्तान् मन्त्रान् पठित्वा परस्परं मेलयत**

| | |
|---|---|
| विश्वकर्माणः | पिता वर्तते । |
| भूमिः | मा गृधः । |
| अहम् | त्यक्तेन भुञ्जीथाः । |
| पर्जन्यः | पुत्रोऽस्मि । |
| कस्यस्विद्धनम् | यज्ञं तन्वते । |
| इदं जगत् | माताऽस्ति । |
| त्वं | ईशा वास्यम् । |

**२. पाठस्य षष्ठस्यानुच्छेदस्य लेख्यचिह्नानां परिपालनेन पठनं विधत्त ।**

**३. अधस्तनमनुच्छेदं निरवच्छिन्नं पठित्वा कोष्ठस्थशब्दैः रिक्तस्थानं पूरयत**

अस्मान् परितो यानि पञ्चमहाभूतानि सन्ति तेषां समवाय एव पर्यावरणं कथ्यते । पर्यावरणं वातावरणपदेनापि व्यवह्रियते । सर्वाण्यपि पर्यावरणतत्त्वानि प्रकृतौ समायान्ति । प्रकृतिरियं मानवैः सह समेषां प्राणिनां निर्विकल्पम् आश्रयस्थलं वर्तते । मानवो यत्र निवसति, यत् खादति, यद् वस्त्रं धारयति, यज्जलं पिबति, येन वायुना निःश्वसति तत् सर्वं पर्यावरणशब्देन अभिधीयते । सर्वेषां प्राणिनां जीवनाधाररूपं पर्यावरणमिदं सम्प्रति विविधसमस्याभिः ग्रस्तमिति चिन्ताया विषयो वर्तते । इदानीं मानवानां प्रकृतिविरोधिभिः कार्यकलापैः पर्यावरणं शनैः शनैर्विक्रीयमाणमस्ति । पर्यावरणस्य अद्यतनी समस्या न केवलमस्माकं देशस्य अपि तु समस्तविश्वस्य समस्याऽस्ति । पृथिव्याः प्रतिदिनं वर्धमानं तापमानमस्या एव समस्याया उपजं विद्यते । साम्प्रतं यानि जलवाय्वादीनि अत्यावश्यकानि जीवनतत्त्वानि उपलभ्यन्ते तानि मलिनानि प्रदूषितानि च दृश्यन्ते । तेन रोगाः प्राकृतविपत्तयश्च वर्धमानाः सन्ति । अस्माकमप्राकृतिकीभिः क्रियाभिरेव पर्यावरणं शिथिलायते । विकृते पर्यावरणे हनिरपि अस्माकमेव भवति । अतः पर्यावरणस्य संरक्षणाय अस्माभिः मनसा, वाचा, कर्मणा च सदैव प्रयतनीयम् ।

(क) प्रकृतिः समेषां प्राणिनां ........................ आश्रयस्थलं विद्यते । (सविकल्पम्, निर्विकल्पम्)

(ख) पर्यावरणस्य संरक्षणाय अस्माभिः ........................ प्रयतनीयम् । (सदैव, यदाकदा)

(ग) ........................ पर्यावरणतत्त्वानि प्रकृतौ समायान्ति । (सर्वाणि, कानिचन)

(घ) पर्यावरणं ........................ इति पदेनापि व्यवह्रियते । (वातावरणम्, तापमानम्)

(ङ) अस्माभिः ........................ क्रियाकलापाः त्याज्याः । (प्रकृत्यनुकूलाः, प्रकृतिविरोधिनः)

हाम्रो वरिपरि जुन पञ्चमहाभूत छन्, तिनीहरूको समूहलाई नै पर्यावरण भनिन्छ। पर्यावरणलाई 'वातावरण' शब्दले पनि व्यवहार गरिन्छ (चिनिन्छ)। पर्यावरणका सबै तत्त्वहरू प्रकृतिभित्र समाहित हुन्छन्। प्रकृति मानवसहित सबै प्राणीको विकल्परहित आश्रयस्थल हो। मानिस जहाँ बस्छ, जे खान्छ, जुन कपडा लगाउँछ, जुन पानी पिउँछ, जुन वायुले श्वास फेर्दछ, ती सबलाई पर्यावरण भनिन्छ। सबै प्राणीको जीवनको आधारका रूपमा रहेको यो पर्यावरण अहिले विभिन्न समस्याले ग्रस्त छ जुन ठुलो चिन्ताको विषय हो। अहिले मानिसका प्रकृतिविरोधी क्रियाकलापले पर्यावरण बिस्तारै बिस्तारै बिग्रँदै गइरहेको छ। पर्यावरणसम्बन्धी आजको समस्या केवल हाम्रो देशको मात्र नभई समस्त विश्वको समस्या हो। पृथिवीको प्रतिदिन बढिरहेको तापमानको समस्या यसैको उपज हो। आजभोलि जति पनि जल, वायु आदि जीवनका लागि अत्यावश्यक तत्त्व पाइन्छन्, ती फिका (मैला) र दूषित देखिन्छन्। त्यसको फलस्वरूप रोग र प्राकृतिक विपत्ति बढिरहेका छन्। हाम्रा अप्राकृतिक क्रियाकलापले नै पर्यावरण शिथिल हुन्छ। पर्यावरण बिग्रिएमा हाम्रै हानि हुन्छ। त्यसैले पर्यावरणको संरक्षणका लागि हामीले मन, वचन र कर्मले सधैँ प्रयत्न गर्नुपर्छ।

४. **पाठादुद्धृतस्य अधस्तनस्यानुच्छेदस्य सस्वरं मौनं च पठनं विधाय प्रश्नान् उत्तरयत**

प्रकृतौ यत्किमपि वस्तुक्रियादिकं वर्तते, तत्सर्वमपि सृष्टेः सञ्चालनायावश्यकमेव। यदि तेषु एकमपि लुप्तं विकृतं वा भवति तर्हि पर्यावरणम् असन्तुलितं जायते। पर्यावरणेऽसन्तुलिते सति अनेका विपत्तय आपद्यन्ते। अत एव शुक्लयजुर्वेदः 'द्यौः शान्ति....' इत्यादिना मन्त्रेण आकाश-पृथिवी-जलादिषु सर्वविधप्राकृतवस्तुषु शान्तिं कामयते। शान्तिकामा वयं न केवलं स्वजनानाम् अपि तु सर्वेषां हितमिच्छामः। 'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्' इत्यस्माभिः पूर्वजेभ्यः शिक्षितः परम्परया अङ्गीकृतश्च मन्त्रोऽस्ति।

(अ) **एकपदेन उत्तरं लिखत**

(क) 'द्यौः शान्तिः...' मन्त्रोऽयं कस्माद् वेदादुद्धृतोऽस्ति ?

(ख) वयं कीदृशाः स्मः ?

(ग) के सुखिनो भवन्तु ?

(घ) भद्र-शब्दस्य कोऽर्थः ?

(ङ) प्राकृतवस्तुषु विकृतेषु किमसन्तुलितं भवति ?

**(आ) रिक्तस्थानं समुचितपदेन पूरयत**

(क) सर्वाणि प्राकृतवस्तूनि .................... सञ्चालनाय आवश्यकानि भवन्ति ।

(ख) सर्वे .................... सन्तु ।

(ग) पर्यावरणेऽसन्तुलिते अनेकाः .................... आपद्यन्ते ।

(घ) वयं .................... हितमिच्छामः ।

(ङ) 'सर्वे भवन्तु....' इत्यादिकः अस्माभिः .................... शिक्षितो मन्त्रोऽस्ति ।

**(इ) पूर्णवाक्येन उत्तरं लिखत**

(क) पर्यावरणं कदा असन्तुलितं भवति ?

(ख) अनुच्छेदे प्रयुक्तानि त्रीणि क्रियापदानि लिखत ।

(ग) 'सुखिनः' इति पदम् एकवचने परिवर्त्य वाक्ये प्रयोगं कुरुत ।

(घ) पौरस्त्यवाङ्मयानुयायिनाम् अस्माकं वैशिष्ट्यं किम् ?

(ङ) अनुच्छेदे वर्णितान् विषयान् विमृश्य सारवाक्यं लिखत ।

**५. पाठस्य त्रिवारं द्रुतपठनं कृत्वा प्रतिवारं पठनगतेर्वर्धनाभ्यासं विधत्त ।**

**६. पाठस्य मौनपठनं विधाय अज्ञातार्थानि पदानि रेखाङ्कितानि कुरुत ।**

**७. पाठस्थं सप्तममनुच्छेदम् उच्चैः पठित्वा कक्षायां श्रावयत ।**

**८. अधस्तनं श्लोकं पठित्वा शिक्षकसाहाय्येन स्वमातृभाषायाम् अर्थं प्रकाशयत**

पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥

**९. पाठस्य उपान्तिममनुच्छेदं सन्धिच्छेदपूर्वकं पठित्वा अव्ययपदानि रेखाङ्कितानि कुरुत ।**

## लेखनम्

१. **पाठस्य चतुर्थस्य अनुच्छेदस्य सन्धिविच्छेदपुरःसरमनुलेखनं कुरुत ।**

२. **पुस्तकमवलम्ब्य शब्दानामर्थं लिखत**

भोक्ता, मुक्तिः, महाभूतानि, मा गृधः, सम्प्रति, कश्चित्, स्थावरः, श्वसनम्

३. **पर्यायपदे परस्परं मेलयत**

| | |
|---|---|
| सम्प्रति | संसारः |
| पर्यावरणम् | वारिवाहः |
| प्रकृतिः | सकलम् |
| जगत् | प्राकृतस्रोतांसि |
| प्राकृतसम्पदः | ददाति |
| मेघः | वातावरणम् |
| अस्ति | वर्तते |
| यच्छति | इदानीम् |
| निखिलम् | स्वभावः |

४. **कोष्ठकस्थपदानां साहाय्येन 'पुत्रोऽहं पृथिव्याः' पाठाद् उत्तराणि लिखत**

(क) मम माता का ? (भूमि)

(ख) अहं कस्याः पुत्रोऽस्मि ? (पृथिवी)

(ग) पिता कः ? (पर्जन्य)

(घ) पर्जन्योऽस्मान् किं करोतु ? (पृ-लोट्, प्रथमपुरुषैककवचनम्)

(ङ) विश्वकर्माणः पृथिव्यां कं तन्वते ? (यज्ञ)

(च) प्राणिनः कुतो जनित्वा कुत्र विचरन्ति ? (पृथिवी, पपञ्चम्येकवचनम्)

(छ) इदं सर्वं जगत् केन वास्यम् ? (ईश्वर)

(ज) अस्माभिः प्राकृतसंसाधनानि कथं भोक्तव्यानि ? (त्यागपूर्वक)

## ५. प्रदत्तानि पदानि शुद्धानि विधाय अभ्यासपुस्तिकायां लिखत

शंशाधनम्, प्राक्रितवस्तुनि, कस्यश्चित्, भुन्जिथा:, ईदानिम्, प्रकृतिपुजनम्, सम्रक्षणम्, पर्याबरणम्

## ६. प्रदत्तानां पदानां वाक्ये प्रयोगं दर्शयत

प्रकृतिः, पर्यावरणम्, पूजयन्ति, पूजा, सुखिनः, निरामयाः, जगत्, हननम्, स्पर्धा, प्रतिभाति, सश्रद्धम्, तापमानम्, वर्धमानः, प्रकृतिविरोधी, जीवनाधारः

## ७. प्रदत्तस्य अनुच्छेदस्य पठनेन तदनुवर्तिनां प्रश्नानामुत्तरं वदत

अस्मान् परितो यानि कानि अपि प्राकृतवस्तूनि सन्ति तानि सर्वाणि परेषां हिताय समर्पितानि सन्ति । तेषामस्तित्वं केवलं परोपकाराय एव भवति । परेषां निःस्वार्थमुपकारः परोपकारः कथ्यते । वृक्षाः परोपकाराय फलन्ति । ते फल-पुष्प-पत्रादीनां भारं प्रधाय प्राणिनामुपकारं कुर्वन्ति । वृक्षाः स्वयमेव फलं न खादन्ति न च पत्र-पुष्प-काष्ठादीनामुपभोगं कुर्वन्ति । ते स्वयमातपे स्थित्वा अन्येषां छायां कुर्वन्ति । एवमेव नद्यः स्वयमेव जलं न पिबन्ति । ताः परोपकारय एव सततं वहन्ति । तथैव गावः परोपकाराय एव दुहन्ति । गावो दुग्ध-मूत्र-गोमयादिभिर्जनानामुपकारं कुर्वन्ति । वारिवाहाः (मेघाः) वर्षाभिर्भूमिं सिञ्चन्ति परं ते सस्यानि नैव खादन्ति । सर्वाण्यपि प्राकृतवस्तूनि दानशीलानि वर्तन्ते । अत एव सर्वाणि प्राकृतवस्तूनि पूजनीयानि सन्ति । अस्माभिरपि प्राकृतवस्तूनां संरक्षणे परोपकारककर्मसु च सदैव प्रवर्तितव्यम् । अस्माकं शरीरमपि परोपकाराय भवेत् । जगति परोपकारसमं श्रेष्ठं पुण्यं च किमपि न विद्यते । उक्तञ्चास्ति-

**परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः ।**
**परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥**

(क) परोपकारः कः ?

(ख) प्राकृतवस्तूनामस्तित्वं किमर्थं भवति ?

(ग) वृक्षा अस्मभ्यं किं किं यच्छन्ति ?

(घ) भूमेः सेचनं के कुर्वन्ति ?

(ङ) अस्माकं शरीरं किमर्थं वर्तते ?

(च) जगति कस्य महिमा सर्वोपरि विद्यते ?

(छ) श्लोकस्थानि चत्वारि वाक्यानि तेषामर्थञ्च वदत ।

हाम्रो वरिपरि जति पनि प्राकृतिक वस्तु छन्, ती सबै नै अरूको हितका लागि समर्पित छन् । तिनीहरूको अस्तित्व केवल परोपकारका लागि छ । अरूको निःस्वार्थ उपकार गर्नु नै परोपकार हो । वृक्षहरू परोपकारका लागि फल्दछन् । तिनीहरू फल, फूल, पात आदिको भारलाई आफूमा धारण गरेर प्राणीको उपकार गर्छन् । वृक्षहरू आफूले फल खाँदैनन्, न त पात, फूल, काठ आदिको उपभोग नै गर्छन् । तिनीहरू आफू घाम वा गर्मीमा बसेर अरूलाई छाया (शीतलता) दिन्छन् । त्यसै गरी नदी आफैँ पानी पिउँदैनन् । तिनीहरू परोपकारका लागि नै निरन्तर बगिरहन्छन् । त्यसै गरी गाई परोपकारका लागि नै दुध दिन्छन् । गाई दुध, गहुँत, गोबर आदिद्वारा मानिसको उपकार गर्छन् । बादलले वर्षाद्वारा भूमिको सिँचाइ गर्दछ तर उसले अन्नबाली खाँदैन । सबै प्राकृतिक वस्तुको दान गर्ने स्वभाव वा धर्म हुन्छ । त्यसैले सबै प्राकृतिक वस्तु पूजा गर्न योग्य छन् । हामीले पनि प्राकृतिक वस्तुको संरक्षण र अरूको उपकार हुने कर्ममा सधैँ लाग्नुपर्दछ । हाम्रो शरीर पनि परोपकारका लागि होओस् । संसारमा परोपकार जस्तो श्रेष्ठ र पुण्यदायक अरू केही छैन । भनिएको पनि छ-

परोपकारका लागि वृक्ष फल्दछन् । परोपकारका लागि नदी बहन्छन् ।

परोपकारका निम्ति गाईले दुध दिन्छन् । यो शरीर परोपकारकै लागि हो ॥

## ८. पाठाधारेण एकवाक्येन उत्तरं लिखत

(क) समेषां प्राणिनां जीवनाधारः कः ?

(ख) प्रकृतिः अस्मभ्यं श्वसनाय किं ददाति ?

(ग) के भद्राणि पश्यन्तु ?

(घ) सर्वाधिक्येन प्राणवायुप्रदायकौ कौ ?

(ङ) प्राणिनः कस्य अंशाः सन्ति ?

(च) कारणेन विना हते तृणे कर्ता कस्य भागी भवति ?

(छ) पाठे 'सचेष्टैः' इति पदं कस्य पदस्य विशेषणरूपेण प्रयुक्तो वर्तते ?

(ज) 'शुक्लयजुर्वेदः' प्राकृतवस्तुषु किं कामयते ?

(झ) कयोः साधनरूपेण अग्निजलयोः पूजा विधीयते ?

(ञ) कस्यामवस्थायां सर्वनाशोऽपि सम्भवति ?

**९. पाठाधारेण प्रश्नान् उत्तरयत**

(क) पञ्चानां महाभूतानां नामानि कानि ?

(ख) प्रकृतिः प्राणिभ्यो किं किं प्रददाति ?

(ग) 'द्यौः शान्तिः...' इत्यादिना मन्त्रेण कुत्र कुत्र शान्तेः कामना विहिता वर्तते ?

(घ) प्रकृतिः का ? तस्यां कानि वस्तूनि समायान्ति ?

(ङ) नैपालकैर्जनैः पूज्यमानानां दश प्राकृतवस्तूनां नामानि लिखत ।

(च) प्रकृतेः प्राकृतवस्तूनां च पूजा सुरक्षा वा किमर्थमावश्यकी वर्तते ?

(छ) प्रकृतेः संरक्षणस्य उपायान् सारिण्यां प्रदर्शयत ।

(ज) प्रचीनसमये पर्यावरणं कीदृशमासीत् ?

(झ) मानवानां साम्प्रतिकाः कार्यकलापाः कथं प्रकृतिविरोधिनः सिद्ध्यन्ति ?

(ञ) प्रकृतिः कथं प्राणिनां निर्विकल्पं जीवनाधारो विद्यते ?

**१०. शिक्षकस्य सहयोगेन अधस्नतपद्ययोरर्थमन्विष्य गद्ये रूपान्तरणं कुरुत**

(क) छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे ।

फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥

(ख) अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।

यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥

## व्याकरणानुशीलनम्

१. **प्रदत्ताया रूपावल्याः सहयोगेन प्रश्नान् उत्तरयत**

प्रकृति-शब्दस्य रूपाणि-

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| प्रकृतिः | प्रकृती | प्रकृतयः | - प्रथमा |
| प्रकृतिम् | प्रकृती | प्रकृतीः | - द्वितीया |
| प्रकृत्या | प्रकृतिभ्याम् | प्रकृतिभिः | - तृतीया |
| प्रकृत्यै/प्रकृतये | प्रकृतिभ्याम् | प्रकृतिभ्यः | - चतुर्थी |
| प्रकृत्याः/प्रकृतेः | प्रकृतिभ्याम् | प्रकृतिभ्यः | - पञ्चमी |
| प्रकृत्याः /प्रकृतेः | प्रकृत्योः | प्रकृतीनाम् | - षष्ठी |
| प्रकृत्याम्/प्रकृतौ | प्रकृत्योः | प्रकृतिषु | - सप्तमी |
| हे प्रकृते ! | हे प्रकृती ! | प्रकृतयः ! | - सम्बोधनम् |

(अ) **शब्दरूपावलिं निर्मात**

| | | |
|---|---|---|
| यथा- | सम्पत्ति- सम्पतेः | बुद्धि- बुद्धेः |
| प्रकृत्या | मति- .................. | कृति- .................. |
| मत्याम्/मतौ | श्रुति- .................. | गति- .................. |
| स्थितीः | प्रगति- .................. | सृष्टि- .................. |
| सृष्ट्याः/सृष्टेः | दृष्टि- .................. | वृष्टि- .................. |
| कृतीनाम् | नीति- .................. | सिद्धि- .................. |

(आ) **प्रश्नान् उत्तरयत**

(क) दृष्टि-शब्दस्य तृतीयाया एकवचने किं रूपम् ?

(ख) नीति-शब्दस्य प्रथमाविभक्तेः रूपाणि लिखत ।

(ग) गति-शब्दस्य द्वितीयाविभक्तौ कानि रूपाणि ?

(घ) 'अनुभूत्यै/अनुभूतये' इत्यस्य बहुवचनरूपं किम् ?

(ङ) 'वृत्तिः' इति पदं कस्मिन् लिङ्गे अस्ति ?

२. **सृष्टि-स्थिति-विकृति-विपत्ति-शब्दानां सर्वाणि रूपाणि लिखत ।**

३. **कोष्ठकस्थं सङ्केतमनुसृत्य रिक्तस्थानं पूरयत**

(क) महाकविः कालिदासोऽनेकाः ............... रचितवान् । (कृति- द्वितीयाया बहुवचनम्)

(ख) रुष्टायां प्रकृतौ .................. विनाशः सम्भवति । (सृष्टि- षष्ठ्या एकवचनम्)

(ग) सर्वाणि पर्यावरणतत्त्वानि ............... समायान्ति । (प्रकृति- सप्तम्या एकवचनम्)

(घ) पर्यावरणे विकृते कीदृशी .................. भवेत् ? (स्थिति- प्रथमाया एकवचनम्)

(ङ) इदानीं प्राकृतवस्तुषु बह्व्यः .................. दृश्यन्ते । (विकृति- प्रथमाया बहुवचनम्)

(च) अस्माकं प्रकृतिविरोधि आचरणं ........ कारणमस्ति । (विपत्ति- षष्ठ्या बहुवचनम्)

४. **प्रदत्तानि पदानि प्रयुज्य वाक्यानि रचयत**

प्रकृतेः, विपत्तयः, दृष्ट्या, कृतीनाम्, बुद्धिम्, राजनीतिः, रूपावलिम्, कृतीः

५. **प्रदत्तं धातुरूपावलिं पठित्वा अभ्यासपुस्तिकायामनुलिखत**

वृध् (वर्ध्) इति आत्मनेपदिधातोः विधिलिङ्-लकाले रूपाणि-

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | |
|---|---|---|---|
| वर्धेत | वर्धेयाताम् | वर्धेरन् | - **प्रथमः पुरुषः** |
| वर्धेथाः | वर्धेयाथाम् | वर्धेध्वम् | - **मध्यमः पुरुषः** |
| वर्धेय | वर्धेवहि | वर्धेमहि | - **उत्तमः पुरुषः** |

६. **उपर्युक्तां धातुरूपावलिं पठित्वा अधस्तनीं रूपावलिं पूरयत**

लभ्-धातोः विधिलिङि रूपाणि-

| **एकवचनम्** | **द्विवचनम्** | **बहुवचनम्** | |
|---|---|---|---|
| लभेत | ............. | ............. | **– प्रथमः पुरुषः** |
| ............. | लभेयाथाम् | ............. | **– मध्यमः पुरुषः** |
| ............. | ............. | लभेमहि | **– उत्तमः पुरुषः** |

७. **उपरितनायाः रूपावल्याः साहाय्येन उदाहरणं चानुसृत्य धातुरूपं परिवर्तयत**

| | | |
|---|---|---|
| यथा-लभ्- लभेय | एध्- एधेय | वृत् (वर्त्)- वर्तेय |
| वृत् (वर्त्)- वर्तेत | स्पर्ध्- ................. | पच्- ................. |
| एध्- ................. | प्रवृत्- प्रवर्तेरन् | लभ्- ................. |
| सेव्- ................. | स्पर्ध्- ................. | भज्- भजेथाः |
| सेव्- सेवेमहि | बाध्- ................. | यत्- ................. |
| यत्- यतेध्वम् | मुच् (मुञ्च्)- ............... | विजि (विजय्) - ................. |
| वन्द्- ................. | वृत्- वर्तेयाताम् | एध्- ................. |

८. **भुज्-धातोः विधिलिङ्-लकारस्य रूपाणि पठित्वा कृ-धातोः आत्मनेपदे विधिलिङ्-लकारस्य रूपाणि पूरयत**

**भुज्-धातोः**

| | | |
|---|---|---|
| भुञ्जीत | भुञ्जीयाताम् | भुञ्जीरन् |
| भुञ्जीथाः | भुञ्जीयाथाम् | भुञ्जीध्वम् |
| भुञ्जीय | भुञ्जीवहि | भुञ्जीमहि |

**कृ-धातोः-**

| | | |
|---|---|---|
| कुर्वीत | ................... | कुर्वीरन् |
| ................... | कुर्वीयाथाम् | ................... |
| कुर्वीय | ................... | कुर्वीमहि |

९. **एध्–धातोः (वृध् : वर्ध्–धातुवत्) विधिलिङ्–लकारे रूपाणि लिखत ।**

१०. **परस्परं मेलयत**

| | |
|---|---|
| सः/सा/तत्/छात्रः | कुर्वीथाः |
| तौ/ते/ते/छात्रौ | लभेरन् |
| ते/ताः/तानि/छात्राः | एधेयाताम् |
| त्वम् | स्पर्धेय |
| युवाम् | वन्देध्वम् |
| यूयम् | भुञ्जीमहि |
| अहम् | बाधेत |
| आवाम् | पचेयाथाम् |
| वयम् | वर्तेवहि |

११. **कोष्ठस्थं संकेतमनुसृत्य रिक्तस्थानं पूरयित्वा वाक्यानि रचयत**

(क) नक्तं दधि न ........................ । (भुज्, वि.लिङ्, प्रथमैकवचनम्)

(ख) त्वं प्रकृतवस्तूनि त्यागेन ........................ । (भुज्, वि.लिङ्)

(ग) यूयं निर्दिष्टकार्येषु शीघ्रं ........................ । (प्रवृत्, वि.लिङ्)

(घ) हे मातः ! अहं भोजनं ........................ । (लभ्, वि.लिङ्)

(ङ) यूयं प्रतिदिनं पठनगतेर्वर्धनाय ........................ । (यत्, वि.लिङ्)

## रचनात्मकः अभ्यासः

१. **'पर्यावरणशिक्षाया आवश्यकता' इति विषयमवलम्ब्य सप्तवाक्यात्मकमनुच्छेदं रचयत ।**

२. **'प्रकृतिसंरक्षणम्' इति विषये एकं लघुनिबन्धं लिखत ।**

## श्रवणपाठः

संस्कृतभाषायां व्याकरणस्य विशिष्टं स्थानं विद्यते । प्रायेण सर्वासां भाषाणां स्वकीयानि व्याकरणानि भवन्ति । संस्कृतभाषायास्तु अत्यन्तं व्यवस्थितं वैज्ञानिकं च व्याकरणं वर्तते । व्याकरणस्य आधारभूतानां नियमानां ज्ञानेन विना संस्कृतवाक्यानां पठनमात्रमपि दुष्करं भवति । इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशली, शाकटायनः, पाणिनिः, अमरः, जैनः इत्येते संस्कृतभाषायाः प्रसिद्धा वैयाकरणाः सन्ति । तेषु वैयाकरणेषु पाणिनिः सर्वोन्नतं स्थानमलङ्करोति । पाणिनिना विरचितम् 'अष्टाध्यायी' इति नामकं व्याकरणं सर्वथा प्रामाणिकमस्ति । ग्रन्थोऽयं क्रमबद्धानां सूत्राणां सङ्ग्रहो विद्यते । व्याकरणमिदं समृद्धम्, व्यवस्थितम्, वैज्ञानिकम्, सर्वशास्त्रोपकारकं च स्वीक्रियते ।

व्याकरणं वेदाङ्गेषु प्रमुखमङ्गमस्ति । षडङ्गस्य वेदस्य मुखं व्याकरणमस्तीति पाणिनिमुनिना शिक्षाग्रन्थे वर्णितं वर्तते । व्याकरणं शब्दशास्त्रं विद्यते यतोऽत्र शब्दा व्युत्पाद्यन्ते । अत्र धातुषु शब्देषु च विविधेष्वर्थेषु विविधानां प्रत्ययानां योजनेन शब्दा निर्मीयन्ते । समासादिप्रक्रियया चात्र शब्दानां व्युत्पादनं भवति । लिङ्गानुशासनं च व्याकरणस्य प्रमुखो विषयो विद्यते । वाक्येषु कारकविभक्तीनां समुचितप्रयोगस्य ज्ञानं व्याकरणादेव लभ्यते । धातु-शब्दरूपाणां निष्पादनाय तेषां समुचितप्रयोगाय च व्याकरणाध्ययनम् आवश्यकं भवति । संस्कृतभाषायां पदत्वमापन्नाः साधुशब्दा एव वाक्ये प्रयोगार्हा भवन्ति । अतः अर्थान्वेषणपूर्वकं शब्दसाधुत्वप्रकाशनं साध्वसाधुप्रयोगनिर्णयश्च व्याकरणस्य मूलभूतं प्रयोजनं वर्तते । शब्दानामर्थस्य, सन्धिव्यवस्थायाः, प्रकृति-प्रत्ययादीनां च समुचितं ज्ञानं व्याकरणस्य ज्ञानेन विना न सम्भवति । अतो वेदानां सम्यग्ज्ञानाय व्याकरणस्य ज्ञानमपरिहार्यं मन्यते ।

# एकादशः पाठः

## पाठप्रवेशः

# कृष्णगण्डक्या महिमा

काष्ठमण्डपस्य बुढानीलकण्ठविद्यालये अष्टमकक्षायाम् अधीयानः शङ्करगर्बुजा अवकाशे मातुलगृहं गतवान् वर्तते । तस्य मातुलगृहं म्याग्दीमण्डलस्य वेणीनगरेऽस्ति । मातुलेन साकं सः अवकाशसमये एव मुक्तिनाथमन्दिरमपि अगच्छत् । प्रत्यावर्तनक्रमे काकवेणीं प्राप्तः स दामोदरकुण्डस्य मार्गम् अपश्यत् । मातुलाद् दामोदरकुण्डस्य महिमानं च श्रुत्वा स तत्र गन्तुमैच्छत् । मातुलो दामोदरकुण्डगमने मार्गस्य काठिन्यं श्रावयित्वा तं न्यवारयत् । ततस्तौ गृहं प्रत्यागतवन्तौ ।



कृष्णगण्डक्यास्तटे वर्तमानाद् मार्गात् प्रत्यावर्तमानौ तौ गलेश्वरदर्शनं विधाय वेणीं प्राप्तवन्तौ । अपरेद्युः प्रातः निद्रातो जागृतो भूत्वा यदा गृहाद् बहिर्निःसृतवान्, तदा स कृष्णगण्डकीं नमन्तीं मातामहीमपश्यत् । सः अपृच्छत्, "मातामहि ! भवती कं नमन्ती वर्तते ।"

मातामही अकथयत्, "कृष्णगण्डकीं नौमि ।" सः अकथयत्, "कृष्णगण्डकी अपि अन्या नदी इव सामान्या नदी नास्ति किम् ? एषा किमर्थं प्रणम्या वर्तते ?"

मातामही अकथयत्, "मुक्तिनाथं गत्वा आगतवानसि परं कृष्णगण्डक्या महिमानं न जानासि ? मातुलः अस्या विषये किमपि न अकथयत् ?"

सः अकथयत्, "मया पृच्छा एव न दर्शिता । अतस्तेन न कथितं स्यात् । भवती कथयतु कोऽस्ति कृष्णगण्डक्या महिमा ?" ततो मातामही शङ्करं कृष्णगण्डक्या महिमानम् अकथयत् ।

